अनुष्टुभ भवेच्छन्द आपश्चैव तु दैवतम् ॥
सौत्रामण्यावभृथके विनियोगस्य कल्पित: ॥
उदुत्यमृषि: प्रस्कण्वो गायत्रं सूर्यदेवता ।
चित्रमित्यत्र कुत्सस्तु यवरी सूर्यदेवता ॥
प्रणवो भूर्भुव: स्वश्च गायत्र्यापि ऋचा त्रयम् ॥
अघमर्षणसूक्तस्य ऋषिरेवाघमर्षण: ।
छन्दोऽनुष्टुभं प्राक्त रायश्चैव तु दैवतम् ॥
द्रुपदादघमर्षण सूक्त मार्जने व्याहरेदिति ।
स्मृतिभि: परिशिष्टैश्च विशेषस्तोयसेचने ॥
उक्ताभ्योर्द्ध विभागेन कर्तव्य: सोऽपि स द्विजै. ।
आपोहिष्ठेति विख्यं अष्टाक्षरपदं नव ॥
पादान्ते प्रक्षिपेद्वापि पादमध्येन च क्षिपेत् ।
भूमौ मूर्ध्नि तथाकाशे मुर्ध्नाकाशे तथा भुवि ॥
एवं वारि द्विज: सिञ्चन् तर्पयेत् सर्वदेवता: ।
उदुत्यच्चित्रं देवाना सुस्थाने नियोजयेत् ॥
हंस: शुचि: सदित्यादि केचिदिच्छन्ति सूरय: ।
अव्याकृतमिदं ह्यासीत् सदेवासुरमानुषम् ॥
सङ्क्षेपायासृजद् ब्रह्मा सप्तमा व्याहृती. पुरा ।
भूर्भुव: स्वर्मह जनस्तप: सत्यं तथैव च ॥
आद्यास्तिस्रो महामोक्षा: सर्वत्रैव नियोजनात् ।
अग्निर्वायुस्तथा सूर्यो बृहस्पत्याप एव च ॥
इन्द्रश्च विश्वदेवाश्च देवता: समुदाहृता: ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप् च जगतीचैव छन्दांस्येतान्यनुक्रमात् ।

भरद्वाजः काश्यपश्च गौतमोऽत्रिस्तथैव च ॥
विश्वामित्रो जमदग्निर्वसिष्ठश्च ऋषिः क्रमात् ।
एताभिः सकलं व्याप्तमेताभ्यो नास्ति चापरम् ॥
सप्तैते स्वर्गलोका वै सत्यादूर्ध्वं न विद्यते ।
तस्माल्लोकात्परा मुक्तिरर्वाचीना यदृच्छया ॥
प्राणायामेष्वेता अभ्यस्याः पूर्वकादिभिः ।
ॐमापोज्योतिरित्येतच्छिरः पश्चात्प्रयुज्यते ॥
प्रत्योङ्कारमभ्यस्तो मन्त्रोऽयं तैत्तिरीयके ।
सप्तोङ्कारवदर्थादि विदुर्ब्रह्मविदो जनाः ॥
प्रणवाद्यन्तगायत्री प्राणायामेष्वयं विधिः ।
गायत्र्यादिकचित्तान्तैर्मन्त्रैश्च प्रागुदीरितैः ॥
उपासीरन्द्विजाः सायं यावन्नोदेति भास्करः ।
एवं चालयते यस्तु सन्ध्यामुपासते ॥
सर्वतीर्थाभिषेकं तु लभते नात्र संशयः ।
गोसहस्रं सारस्वं षड्गुणं कनकमेव च ॥
दर्भैताम्रतिलं चापि एतैस्तर्पणकाद्द्विजाः ।
स मन्त्रार्घ्यं दिवृन्देवानात्मानं त्रिदिवं नयेत् ॥
त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः ।

विरुध्यासे निवर्त्तन्ते मन्देहानामदर्शनात्॥
रवेरप्यशवो ह्यस्माद् यातायाता ह्यसङ्गताः।
अराम वयरीराया स्वामिनैव लयङ्गताः॥
हेयायस्कसकुर्व्वाणाः प्रफस्फुरणवर्जिताः।
सध्याङ्गा निर्जयाख्याताः सूर्य्यस्यन्दनवाजिनः॥
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः।
यसन्ध्यामुपासीत प्रक्षिपन्ति जलं रूदत्॥
ॐकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम्।
दह्येरंस्तेन ते दैत्या वज्रिभूतेन वारिणा॥
सहस्राक्षुरये तिष्ठन् योऽधीयानश्च तु श्रुतौ।
याज्ञवल्क्यः समीक्षेत श्रपीयानुक्तवासनः॥
श्वे त्वनुदिवादित्ये सन्ध्योपासिकारी भवेत्।
उदिते सति या सन्ध्या बालक्रीडोपमा च सा॥
सन्ध्या येन न विज्ञाता ज्ञात्वा नैव ह्युपासिता।
स जीवन्नेव शूद्रत्वं स्वाशु गच्छति मानवः॥
मान्त्र पार्थिवमाग्नेयं वायव्यं दिव्यमेव च।
वारुणं मानसञ्चेति सप्तैतानु क्रमेण तु॥
यत्र आपस्तु वै मान्त्रं मृदालम्भस्तु पार्थिवम्।
भस्मना स्नानमाग्नेयं गोरेणुनानिलं स्मृतम्॥
आतपे सति या वृष्टिः दिव्यस्नानं तदुच्यते।
बहिर्नद्यादिके स्नानं वारुणं प्रोच्यते बुधैः॥
यद्ध्यानं मनसा विष्णोर्मानसं तत्प्रकीर्त्तितम्।
असामर्थ्येन कायस्य कालशक्त्याद्यपेक्षया॥
तुल्यं फलानि सर्वाणि स्मृत्यायं परापरः।

स्नानानां मानसस्थानमन्वाद्यैः परमं स्मृतम् ॥
कृतेन येन मुच्यन्ते गृहस्था अपितु द्विजा. ।
नित्यादीनां त्रयाणां तु स्नानानामोघमं परम ॥
सद्यः पापहरं प्रोक्तं प्राजापत्यव्रताधिकम् ।
उषस्युषसि यत्स्नानं क्रियतेऽ सुदिनेऽरवौ ॥
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ।
प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत् ॥
सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति ।
अस्नातो नाचरेत्कर्म जपहोमादि किञ्चन ॥
विद्यन्ते च सुहृत्पानि दूषिकाणि हरन्ति च ।
अङ्गानि समतां यान्ति उत्तमान्यधमैः सह ।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवते च दिवारात्रौ प्रातः स्नानेन शुद्ध्यति ॥
उषःस्नानं प्रशंसन्ति सर्वे च पितरोऽमराः ।
दृष्टादृष्टकरं पुण्यं शंसन्ति पितरोऽपि हि ॥
प्रातःस्नायी हि यो विप्रः सोऽर्हः स्यात्सर्वकर्मसु ।
नत्कृत कर्म न्तृकिञ्चित्तत्सर्व स्याद्यथायवत ॥
अवहान स्नानकालेनु य कुर्याद्दन्तधावनम् ।
पापीयान् रौरवं याति पितृघ्यापहतो ध्रुवम ॥
यच्च श्मश्रुषु केशेषु यद्वा देहे च लोमसु ।
तस्माध्यास न वस्त्रेण जलं विद्वान् हि मार्जयेत् ॥
मार्जिते पितरः सर्वे सर्वा अपि च देवताः ।
तथा सर्वे मनुष्याश्च त्यजेरन नियतं द्विजम् ॥
स्नानं मधिष्ठितं सर्वे तीर्थं पितृदिवौकसः ।

ततो नद्याद्यमो गच्छन्निराशा स्तेऽशपन्ति हि ॥
येतु स्नानार्थिन स्तीर्थं संतिष्ठन्ति जलाश्रयाः ।
तद्देह मुपतिष्ठन्ति धर्मैः पितृदिवौकसः ॥
अतो न चिन्तयेत्तीर्थं व्रजेद्देवतु चिन्तितम् ।
देवखातनदीस्रोत सरःसु स्नान माचरेत् ॥
स्नानं नद्यादि वन्येषु सद्भिः कार्यं सरस्सु ।
खातमन्तोय कूपस्थं तोय तत्र तु कृत्रिमम् ॥
न तीर्थे स्थ्याकुले स्नायान्न सज्जनसमाश्रये ।
दर्भहीनोऽप्यचित्तस्तु न नग्नो न शिरो विना ॥
कदाचिद्विदुषा मिथ्या न स्नातव्यं परात्मना ।
अभःसद्दुष्कृतांशेन स्नानकर्त्तापि लिप्यते ॥
पञ्च वा सप्त वा पिण्डान् स्नायादुद्धृत्य तत्र तु ।
वृथास्नानादिकानीह विशेषेण विवर्जयेत ॥
वृथा चोष्णोदकस्नानं वृथा जप्यमवैदिकम् ।
वृथा चाश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम् ॥
मासे नभसि न स्नायात्कदाचिन्निम्नगासु च ।
रजस्वला भवन्त्येता वर्जयित्वा समुद्रगाः ॥
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा ।
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ॥
न स्नायात् क्षोभितास्तासु स्वयं न क्षोभयेच्च ताः ।
न निर्गतासु तीर्थाच्च यतन्तीष्वाहतासु च ॥
रविसंक्रान्तिवारेषु ग्रहणेषु शशिक्षये ।
व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा ॥
न स्नायाच्छूद्रहस्तेन नैकहस्तेन वा तथा ।

उद्धृताभिरपि स्नाया दाहृताभिर्द्विजातिभिः ॥
स्वभावाभिरनुष्णाभिः कृष्काभिस्तथा द्विजः ।
नवाभिर्निर्दिशाद्वा भिरसंसृष्टाभिरन्वहे ॥
य स्नानमात्रैर्नित्य त प्रकुर्वन्ति देवताः ।
तस्माद्ब्रह्मगुणं स्नान सदा कार्यं द्विजातिभिः॥
अस्माद्दाप्यायनस्नान्त प्रयान्ति यक्षिद्विषम् ।~
की त कान्ति वपु पुष्टि सौभाग्याय प्रवर्धनम् ॥
स्वर्गेच्च दशभिर्गुणैः स्नानं प्रशस्यते ।
सूर्य दि दिनवारेषु तैलाभ्यञ्जनपूर्वकम् ॥
कृत्तापकीर्तिमरण सुतस्नानाभिस्त्वथ ।
आयुश्चार्कादिवारेषु तैलाभ्यङ्गे फल क्रमात् ॥
जलावगाहन नित्य स्नान रवेर्नु वर्षिषु ।
अतिरेकतः कार्यं तस्याथ विधिरुच्यते ॥
गोमयन्मृत्कुशाश्चैव पुष्पाणि पाः का तथा ।
स्नानार्थी प्रयतोनित्य स्नानकाले सदाहरेत् ॥
सुमनोऽभिमत तीर्थं गत्वा प्रक्षाल्य पादयोः ।
हस्तौ चाचम्य विधिवल्लिप्त्वाबद्धैकचेतसा ॥
मृदम्बुभिश्च गात्राणि क्रमात्प्रक्षालयेद्यथा ।
पादौ जङ्घे कटीञ्चैव क्रमात्अर्णं जले स्वभिः ॥
*प्रक्षाल्य हस्त आचम्य नमस्कृत्य च तज्जलम् ।*
गुह्योपगुह्यम् इत्येतद्ब्रह्मा प्रयताञ्जलिः ॥
उरु देहेतिमन्त्रेच कुर्यादापो भिमन्त्रिणः ।
विधिज्ञा कथय, केचिन्मन्त्रान्यार्थवेदिनः ॥
यत्र स्नानेषु यत्तीर्थं नदी पुण्यतरा तथा ।

ता ध्यायेन्मनसा नित्यम् न्यतीर्थं न चिन्तयेत् ॥
गङ्गादिपुण्यतीर्थानि क्षतिमादिषु संस्मरेत्।
ता ध्यायेन्मनसा वापि अन्यतीर्थं न चिन्तयेत्।
महाव्याहृतिभिः पश्चादाचामेत्प्रयतोऽपि सन्।
उदुत्तम इतित्यम् मन्त्रेण प्राङ्मुखो विशेत् ॥
येऽन्तयो दिवि चेत्ये तत्कुर्यादात्मन स्ततः।
सूर्यं पश्यन् जल मुक्त्वा स्मुत्तीर्य ततः स्थलम् ॥
आचम्याथ हरे न्मृत्स्नान्तया काय समालभेत्।
अश्वक्रान्ते रथक्रान्ते इत्याद्यपि पठन्निह ॥
मृत्तिका हरणे चैव इति वाग्यिष्ठजोऽब्रवीत्।
समालभेत्त्रिभिर्मन्त्रै रिद विष्णुरितिर्द्विजः ॥
शिरश्चांसा बक्ष ऊरू पादौ जङ्घ क्रमेणतु।
भास्कराभिमुखो मज्जेदापो ह्यास्मानिति त्रिभिः ॥
उद्धृत्य सर्वगात्राणि निमज्याथ पुनः पुनः।
उत्तीर्याचम्य गात्राणि गोमयेनाथ लेपयेत् ॥
मानस्तोक इति स्तुत्वा प्राग्वदङ्गक्रमेण तु।
इमं मे वरुण। तत्त्व, सत्यं नय अदुत्तमम् ॥
चत तत्समयेत्येतैरात्मान अभिषेचयेत्।
निमज्याचम्य चात्मानं दर्भैर्मन्त्रैश्च पावयेत् ॥
हविष्मतीरिमा आप इदमाप स्तथैवच।
देवीराप इति ह्याभ्यामापो देवीरितीत्यृचा ॥
सम्मृत्य द्रुपदां देवीं शन्नो देवीरपा रसम्।
प्रत्यङ्ग मन्त्रनवकमापो देवी पुनन्तु माम् ॥
चिन्तित मां पुनात्वेतन्मन्त्रे णापि च पावयेत्।

हिरण्यवर्णा इति च पावमाना तथापरे ॥
तरत्समन्दि धावन्ति पवित्राण्यानि शक्तित. ।
स्नानकर्माण्यकैर्मन्त्रै रन्यैश्चाप्यम्बु दैवतै. ॥
प्राच्यास्नानं निमज्याय आचान्तस्त्वन्यदाचरेत् ।
कार्यं कायप्रदेशानां तर्था चैवोदकस्य च ॥
प्राशक्त्ये सति चैवायं विधिरन्यो विपर्यये ।
सोङ्कारांश्चैव गायत्रीं महाव्याहृतिभि रह ॥
विसन्ने चैकधावर्त्या स्नानाद्विद्वानपि द्विज: ।
च्छन्दोमन्य परैर्युक्त स्वगाधाक्षरसंयुतम् ॥
श्रारत्यं प्रणवं स्नायाच्छतमर्धशतं दशम् ।
चिद्रूप परम ज्योतिर्निरालम्बमनामयम् ॥
अव्यक्त मव्ययं शान्तं स्नायाद्वापि हरिं स्मरेत् ।
गायत्री वारिसम्नात. प्रणवे निर्मलाकृत. ॥
विष्णुस्मरण संशुद्धि स्त्यह सर्वेषु कर्मसु ।
योऽधीते वेदवेदार्थं सुस्नात: सर्ववारिषु ॥
शुद्धे दशुचिन, स्नात्सात्स्नात्स्वस्तु शुचिर्यत ।
मन्त्रैश्च मनसा स्नानं नो गोमयस्वदम्बुभि: ॥
तैश्चेन्नोत्सुरमव्याप्य स्नानस्य फलमाप्नु्यु. ।
भाव पूत पवित्र स्नान्मन्त्रपूत स्तथा नर ॥
उभयेन पवित्रस्तु नित्यस्नायी शुचिर्नर. ।
विधिदृष्ट तु यत्कर्म करोतु विधिना नर: ॥
न किञ्चित् फलमाप्नोति क्लेशमात्र हि तस्य तत् ।
उत्पद्यन्ते जले मत्स्या विपद्यन्ते तु तत्र च ॥
तिष्ठन्तोऽपि च ते स्नाने फल नैवाप्नुवन्ति ता: ।

विधिहीनं भवेद्दुष्टं कृतमश्रद्धयापि च ।
तद्धरन्त्यसुरास्तस्य मूढत्वादकृतात्मनः ।
अश्रद्दाविधिसमायुक्तं कर्म यत्क्रियते नृभिः ॥
शुचिभिर्ह्येकचित्तैस्तु तदनन्ताय कल्पते ।
उदात्तं मनुदात्तञ्च विसर्गान्तं तथैव च ॥
द्रुतञ्च स्वरितोदात्तं स्वरं विन्द्यात्तथा प्लुतम्
स्वरान्तं व्यञ्जनान्तञ्च विसर्गान्तं तथैव च ॥
सानुस्वारं पृथक्कञ्च ज्ञातमन्यपरं च यत् ।
हलं शतकतुर्हन्ति वज्रेण शतपर्वणाम् ॥
यथा तथा प्रवक्तारं मन्त्रहीनं स्वरादिभिः ।
स्वरतो वर्णतः सम्यक् सन्ध्याध्यानजपादिषु ॥
सर्वे मन्त्राः प्रयोक्तव्याः होमाः सुरफला नृणाम् ।
नाभेरधस्तादङ्गानि क्षालयित्वा मृदम्भसा ॥
उपविष्टः सिक्तमस्के मन्त्रैः प्रोक्ष्य शुचिर्भवेत् ।
चतुरश्चतुरस्वङ्गुरो द्वौ द्वौ च जङ्घयोस्तथा ॥
द्वौ द्वौ च जानुनोर्वस्य ऊर्वोः पञ्च च पञ्च च ।
द्वावप्येवं तथा गुह्ये दश द्वादश वक्षसोः ॥
द्वौ द्वौ गले च बाह्वोश्च द्वौ द्वे च सुमुखेष्वपि ।
द्वौ द्वौ च चक्षुषोः श्रुत्योः सप्तोङ्कारांश्च मूर्द्धनि ॥
न्यस्तप्रणवसर्वाङ्गः स्नातः स्यात्सर्ववारिषु ।
अकारं मूर्ध्नि विन्यस्य उकारं नेत्रमध्यतः ॥
मकारं कण्ठदेशे तु ब्रह्मीभवति वै द्विजः ।
अनङ्गाक्लिष्टधौतेतु विद्वान्वै रक्तगस्ती ॥
परिधाय मृदम्बुभ्यां करौ पादौ च मार्जयेत्

तद्वाससोरसम्पत्तौ क्षौमक्षौमाविकानि च ॥
कुलापं योगपट्टं वा द्विवासास्तु यथा भवेत् ।
न जीर्णं नीलकाषायं माञ्जिष्ठेन च वाससा ॥
मूत्राद्युपगतैनैव शुचिः स्यान्नैकवाससा ।
एकं वासो यथा प्राप्तं परिधाय मनः शुचिः ॥
अन्ये स्नात्वोत्तरानङ्गम् आचम्य प्राङ्मुखः स्थितः ।
सप्तोङ्कारसमायुक्ताः प्रणवाद्युतकास्तथा ॥
महाव्याहृतयः सप्त दैवतार्षादिसंयुतम् ।
प्रणवाद्यन्तं गायत्र्या तस्याः शिरस्तथैव च ॥
त्रिरावर्त्तनमेतस्याः प्राणायामो विधीयते ।
शक्त्या सुसंयमं कृत्वा तथाचम्य विधानतः ॥
उपास्य विधिवत्सन्ध्यामुपस्थाय च भास्करम् ।
गायत्रीं शक्तितो जप्त्वा तर्पयेद्देवताः पितॄन् ॥
अन्वारब्धेन तोयेन पाणिना दक्षिणेन तु ।
तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना ॥
ब्रह्मेशकेशवान् पूर्वं प्रजापतिं यथाश्रुतिम् ।
छन्दांसि यज्ञानृषीन् सिद्धानाचार्यान् स्नानपायिनः ॥
गन्धर्वयक्षसर्पांश्च मासान्दिननिशानि च ।
देवान्देवानुगांश्चापि नागान् नागकुलानि च ॥
सरितः सागरान् तीर्थान् पर्वतान् कुलपर्वतान् ।
किन्नरान् खेचरान्यक्षान्मनुष्यान्वय तर्पयेत् ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
आसुरिः कपिलश्चैव वोढुः पञ्चशिखस्तथा ॥

सुपर्णाश्च पिशाचाश्च भूतान्यथ पशूंस्तथा ॥
वनस्पतींश्चौषधीश्च भूतग्राम चतुर्विधम्।
ब्रह्मादयो मया तृप्ता आगत्य ददतु तृप्तिं ॥
अटृप्तो मा प्रकुर्वन्तु प्रसीदन्तु ममोपरि ॥
ततः पूर्वाग्रदर्भेषु साग्रेषु सकुशेषु च ॥
प्रादेशिकेषु शुद्धेषु ब्रह्मादिभ्योऽम्बु निक्षिपेत्।
अन्वारभ्यापसव्येन पाणिना दक्षिणेन तु ॥
दक्षिणं जानु भूलग्नो देवेभ्यः सेचयेज्जलम्।
देवेभ्यश्च नमः स्वाहा पितृभ्यश्च नमः स्वधा ॥
मन्यन्ते कपयः केचिदित्येव तर्पणक्रमः।
तर्पमाणेषु कर्मत्वं निजत्वञ्च क्रियापदम् ॥
तर्पयामि पितृन्देवानित्याक्षरपदे पुनः।
सिच्यमानेन तोयेन मन्यन्ते मुनयोऽपरे ॥
देवास्तृप्यन्तु पितरः तृप्यन्त्विति निदर्शनम्।
उदीरतामङ्गिरस आयन्तुनोऽग्निमित्यपि ॥
पितृभ्यश्च स्वधायिभ्यो ये चेह नियतास्तथा।
अग्निष्वात्ताग्निदग्धाश्च तथा बर्हिषदोऽपि च ॥
येन पूर्वेण पितरः सोमपाना सुदीरयेत्।
आवाह्य च पितॄन्नेतैरथ सव्योपवीतिना ॥
दक्षिणाभिमुखो ह्यस्याङ्गुराभ्या मभ्युक्षेचयेत्।
भूलग्न सव्यजानुश्च दक्षिणाग्रकुशेषु च ॥
रूप्यरौप्यतिलैस्ताम्रदर्भमन्त्रै क्षिपेत्तथ।
विना रौप्यसुवर्णाभ्याम्बिना ताम्रतिलैरपि ॥

विना दर्भैश्च मन्त्रैश्च पितृणान्नोपतिष्ठति ।
दर्भैं लौहितदर्भैश्च काशवीरणवल्वजै ॥
शुक्लधान्यतृणैर्वापि दर्भकार्यं चरेद्द्विज ।
न तर्पयेत्पितृन्तीभिर्विद्वानङ्घ्रि कथञ्चन ॥
पात्रस्थाभि सदर्भाभि सतिलाभिश्च तर्पयेत् ।
वसून्रुद्रांस्तथादित्यान्नमस्कारस्वधान्वितान् ॥
एते वै दिव्यपितर एतदायत्तमानुषा ।
ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानलोऽनिल ॥
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिता ।
अजैकपाद हि बुध्नीर्विरूपाक्षोऽथ रैवत ॥
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वर ।
सावित्रश्च जयन्तश्च पिनाकीत्यपराजित ॥
एते रुद्रा समाख्याता एकादश सुरोत्तमा ।
इन्द्रो धाता भग पूषा मित्रोऽथ वरुणोऽर्यमा ॥
अंशुर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च ।
एते वै द्वादशादित्या देवाना परमा स्मृता ॥
एवञ्च दिव्या पितर पूज्या सर्वे प्रयत्नत ।
कव्यवाहोऽनल सोमो यमश्चैव तथार्यमा ॥
अग्निष्वात्ता सोमपाश्च तथा बर्हिषदोऽपि च ।
एते चान्येच पितर पूज्या सर्वे प्रयत्नत ॥
एतैस्तु तर्पिते सर्वे पुरुषार्थिता नृभि ।
यमश्च धर्मराजश्च मृत्युश्चैव तथान्तक ॥
वैवस्वतश्च कालश्च सर्वभूतक्षय स्तथा ।
औदुम्बरश्च नीलश्च दध्नश्च परमेष्ठिना ॥

चित्रश्च चित्रगुप्तश्च वृकोदर तथार्यमा ।
एतैस्तु तर्पितैः सद्भिर्विश्वस्तांस्तर्पितो नृभिः ॥
तस्मात्प्राक् तर्पयित्वैतान् त्रिंशतीन्तर्पयेत्ततः ।
मातामहान्मातुलांश्च सखिसम्बन्धबान्धवान् ॥
स्वजनज्ञातिवर्गीयानुपाध्यायान् गुरूनपि ।
मित्रान् भृत्यानपत्यांश्च ये भवन्ति तदा मृतौ ॥
तान् सर्वांस्तर्पयेद्विद्वान् इच्छन्ते ते यतो जलम् ।
जलस्थश्च जले सिञ्चेत् स्थलस्थश्च तथा स्थलम् ॥
पादौ स्थाप्याभयत्रैव भवेत्तूभयतः शुचिः ।
गोष्पदमात्र सुतृप्तिश्च करौ विप्रौ जले स्थितः ।
अम्बरे तु पिपिटारि आकाशे दक्षिणामुखः ॥
पितॄणां स्थानमाकाशं दक्षिणादिक्तथैव च ।
स्थलगो नार्द्रवासास्तु कुर्यादेवं तर्पणादिकम् ॥
प्रेताहुते नार्द्रवासा नैकवासाः समाचरेत् ।
एवं हि तर्पणं कृत्वा सर्वेषां विधिवद्द्विजः ॥
निष्पीडयेत् स्नानवस्त्रं येन स्नातो भवेद्द्विजः ।
निष्पीडयति यः पूर्वं स्नानवस्त्रं भजानतः ॥
निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः ।
निष्पीडयेत् स्नानवस्त्रं तिलदर्भैः समन्वितम् ॥
न पूर्वं तर्पणाद्वस्त्रं नैवाम्भसि न पादयोः ।
एषु चेत्पीडयेद्वस्त्रं राक्षस तद्रतिक्रमात् ॥
वस्त्रनिष्पीडने मन्त्रमिमं श्लोकमुदाहरेत् ।

तिलदर्भसमायुक्तं कुर्य्युर्नष्टदेहिनाम् ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
तेषां तु दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥
पितृवंशे मृता येच मातृवंशे तथैवच ।
एवं तृप्तिर्भवेत्तेषां तिलैस्तु सह वारिभिः ॥
वस्त्रस्य मलनिर्लेपः शौचस्नानादि कुर्वताम् ।
तस्य पापव्यपोहार्थमिमं मन्त्रमुदीरयेत् ॥
यन्मया दूषितं तोयं मलैः शारीरसम्भवैः ।
तस्य पापस्य निष्कृत्यै यक्ष्मणा सर्व तृप्यताम् ॥
अपुत्रेभ्योऽथ यक्ष्मभ्यो ददामीदं जलाञ्जलिम् ॥
अन्यथा घ्नन्ति ते सर्वे सुकृतं पूर्वसञ्चितम् ॥
अपुत्रा ये मृताः केचित्पुमांसो योषितोऽपि वा ।
अस्मिन्वंशे पितृभ्यो वै दत्तं वस्त्रजलं मया ॥
नास्तिक्येनापि यो विप्र तर्पयेत्पितृदेवताः ।
स तत्तृप्तिकरो धर्मान् प्राप्नुयात्परमाङ्गतिम् ॥
नास्तिक्याद्धमतो यस्तु तर्पयेन्न पितॄन् द्विजः ।
पिबन्ति देहिन स्रावं पितरस्तज्जलार्थिनः ॥
पितॄणां पितृतीर्थेन देवानां देवकेन तु ।
इति मत्वा तु कुर्वाणा मुच्यन्ते गृहमेधिनः ॥
पञ्च तीर्थानि विप्रस्य करे मध्याय दक्षिणे ।
ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यन्तु सौमिकम् ॥
ब्राह्मं पश्चिमलेखायां दैवं स्यादङ्गुलमूर्धनि ।
प्राजापत्य कनिष्ठादौ मध्ये सौम्य विजानतः ॥

अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रतिष्ठितम् ।
कुर्यादद्दद्दश्चैव सम्यक् ज्ञात्वा विधानतः ॥
स प्राप्नुयाद्गृहस्थोऽपि ब्रह्मणः पदमव्ययम् ।
स्नात्वा हुत्वा च जप्त्वा च दत्त्वा चैव तु योऽश्नुते ॥
अमृतं सोऽश्नुते नित्यं तस्य स्थानमनामयम् ।
अस्नात्वाश्नुमलं भुङ्क्ते अजप्ता पूयशोणितम् ॥
अजुह्वच्च कृमीन् कीटान् अददच्च शकृत्तथा ।
आह्लादकरणं स्नानं दुःखशोकापहं तथा ॥
दुःस्वप्ननाशनञ्चैव कार्यं स्नानमतः सदा ।
चित्तप्रसादं बलरूपतपांसि मेधा
मायुष्यशौचसुभगत्वमरोगिताञ्च ।
ओजस्वितान्विप मदात्मुरूपस्य वीर्यम्
स्नानं यशोविभवसौख्यमलोलुपत्वम् ॥
गीर्वाणवृन्दद्विजसत्तमस्तुतः
प्राप्तो मयायुश्च वशिष्ठपौत्रत ।
पापप्रनाशं वितनोति च स्तुतः .
प्रचोदितः स्नानविधिः सलेशः ॥
उद्देशतो मया प्रोक्तः स्नानस्य परमो विधिः ।
द्विजन्मना हितार्थन्तु जपस्यातः परं विधिं ॥

इति श्रीवृद्धपाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां षट्कर्मस्नानविधिर्नाम तृतीयोऽध्यायः । ३ ।

# चतुर्थोऽध्यायः।

जपस्यातः प्रवक्ष्यामि विधिं पराशरोदितम्।
यावद्विधं जपं यद्यद्यथाकार्यं द्विजातिभिः ॥
जप्यानि ब्रह्मसूक्तानि शिवसूक्तानि चैव हि।
वैष्णवानि च सूक्तानि तथा पौराण्यनेकधा ॥
सारस्वतानि दौर्गाणि व रुण्यान्यनलानि च।
पौराणिकानि चान्यानि तथा सिद्धान्तिकानि च ॥
सर्वेषां जपसूक्तानां ऋचां च यजुषां तथा।
साम्नां चैकाक्षरादीनां गायत्री परमो जपः।
तस्याश्चैव तु ॐकारो ब्राह्मणाय उपासितः।
आभ्यां तु परमं जप्यं त्रैलोक्येऽपि न विद्यते ॥
तयोश्च देवतार्थादि समासात्तोऽभिधीयते।
येन विज्ञानमात्रेण द्विजो ब्रह्मत्वमश्नुते ॥
आसीन्नच यदा किञ्चित्सदेवासुरमानुषे।
तदेवाक्षरमेवासीद्व्याप्तविश्वस्तविश्वकः ॥
गतभीरद्वितीयोऽपि एकाकी दिवि मोदते।
चिन्तयामास गायत्री प्रत्यचा साऽभवत्तदा ॥
गायत्री सा अवत्पत्नी प्रणवोऽभूत्पतिस्तथा।
पुनरन्यौ च दम्पत्याविति ताभ्यां प्रभूज्जगत् ॥
प्रणवो हि परं तत्त्वं त्रिदेवं त्रिगुणात्मकम्।
त्रिदेवत्वं त्रिधामञ्च त्रिपञ्च त्रिरवस्थितम् ॥
त्रिमात्रश्च त्रिकालश्च त्रिलिङ्ग कवयो विदुः।

सर्वमेतत्त्रिरूपेण व्याप्तन्तु प्रणवेन तु ॥
ऋग्यजुः सामवेदश्च त्रिवेद इति कीर्त्तितः।
सत्त्व रज स्तमश्चैव त्रिगुणास्तेन चोच्यते ॥
ब्रह्मा विष्णुस्तथेशान स्त्रिदैवत मितीर्य्यते।
अग्निः सोमश्च सूर्य्यश्च त्रिधामेति प्रकीर्त्तिताः॥
शान्तः पदं वह्निः पदं परमपद मुदाहृतम्।
हृत्कण्ठे तालुके चेति त्रिस्थान मिति कीर्त्यते॥
अकारोकारमश्चेति त्रिमात्रा उच्यते सुत!।
भूतभव्यं भविष्यश्च त्रिकाल मिति स स्मृतः॥
स्त्रीपुन्नपुंसकश्चेति त्रिलिङ्गेति प्रकीर्त्तितः।
त्रिस्वभावस्ततो वेदो मन्तव्यो ब्रह्मवादिभिः॥
पर्य्यन्तरूति यच्चैतद्विश्व मुत्पद्यते यतः।
निर्मोत्रिकः समानोऽपि सा.द्दरपि निराद्रिकः॥
स ध्येयः सर्वदा सद्भिः ध्यातव्यश्च विधानतः।
वेदेषु चैव शास्त्रेषु बहुधा स प्रकीर्त्तितः॥
तथा सत्यपि चैकोऽयं षट्कारश्च सदा स्थितः।
कर्मारम्भेषु सर्वेषु त्रिमात्रं सम्प्रकीर्त्तितः॥
स्थितौ दत्र तथोङ्कारः कर्त्तव्यः स तथैव हि।
ऋग्वेदः स्वरितोदात्त उदात्तस्तु यजुः स्मृतौ॥
सामवेदः स विज्ञेयो दीर्घः रम्हुत एव च।
सनत्कुमारसिद्धान्ते प्रणवो विष्णुरुच्यते॥
यत्रास्तस्य च विश्रान्ति स्तत्पर ब्रह्मसञ्ज्ञितम्।
उच्चारितस्य तस्याथ विश्रान्तस्य यदक्षरम्।

तदक्षरं समाध्याये यस्तत्रैव स लीयते ॥
घण्टास्तनितवत्तस्य विश्रान्तिः शब्दवेधसः ।
कुर्वीत ब्रह्मविद्विप्रो यदीच्छेद्योगमात्मनः ॥
सर्वस्यापि च शब्दस्य ह्यन्तमुच्चारितस्य च ।
स ध्यायेद्यस्तु स ज्ञानी शब्दब्रह्मविदुच्यते ॥
याज्ञवल्क्यो मुनीनाञ्च प्राब्रवीज्जनकस्य च ।
वर्षशतजोऽपि न ब्रूयात् स्वभवे शब्दवेधसः ॥
तैलधारामिवाच्छिन्नदीर्घघण्टानिनादवत् ।
अवाग्रूपं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥
स्थित्वा सर्वेषु शब्देषु सर्वं व्याप्तमनेन हि ।
न तेन हि विना किञ्चिदक्षु यान्ति-गिरा यतः ॥
उद्गीत मक्षर ह्येतदुद्गीथम् उपासते ।
उपास्यो मध्यतस्त्वेष दानं विश्रामयेद्धृदि ॥
प्रणवाद्याः स्मृता वेदाः प्रणवे तर्पयो स्थिताः ।
वाङ्मयं प्रणवं सर्वं तस्मात्प्रणवमभ्यसेत् ॥
ब्रह्मार्षं तत्र विज्ञेयमग्निश्च दैवतं महत् ।
आद्यच्छन्दः स्मरेत्तत्र नियोगोद्यादि कर्मणि ॥

उत्पन्नमेतत् जगतः समस्तम्
व्याहृत्य तिष्ठेत्प्रलयेऽपि यत्र ।
एकाक्षरेणापि जगन्ति येन
व्याप्तानि कोऽन्यः परमोऽस्ति तस्मात् ॥
ध्येयं न जप्यं न च पूजनीय
तस्मान्न देवाक्षरणीय मन्यत् ।

दुस्तार संसारपयोधिमग्न-
ताराय विष्णुप्रणवः स पूज्यः ॥
उक्तमुद्दे शतो द्योतत द्वयं मेकाक्षरस्य च।
जप्यर च सतत देवी गायत्री साधुनीच्यते ॥

इति श्रीबृहत्पाराशरीये षट्कर्माणि स्वरूपवर्णन नाम चतुर्थोऽध्याय. ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

गायत्र्या. सम्प्रवक्ष्यामि देवार्षादिक्रमेण तु ।
अक्षराणाञ्च विन्यास तेषाञ्चैव तु देवता ॥
जपे यथाविधा कार्य्या यथाविधा च स्मर्य्यते ।
होमे यथा च कर्त्तव्या यथाच याभिचारके ॥
यत्फलं जपहोमादौ यथावक्ष्यति चैषा ।
ध्यातव्या च यथा देवी यथावत्तन्निबोधत ॥
गायत्री तु पर तत्व गायत्री परमा गति ।
सर्व्वाऽमरैरिव ध्याता तत्र व्याप्त तया जगत् ॥
उत्पाद्यते त्रिपादाद्या तस्यां पुनर्निवेशितम् ।
गायत्री प्रकृतिर्ज्ञेया ओङ्कार पुरुष स्मृत. ॥
ताभ्या उभयरूपोणाञ्जगत्सर्वं प्रवर्त्तते ।
पादास्त्रय स्त्रयो वेदा ज्ञेयु तत्ताक्षराणि च ॥
चतुर्विंशतिरेव स्याच्चैर्व्याप्तमखिल जगत् ।

आदाय चैकं प्रथमन्तु पादं ऋग्भ्यो द्वितीयन्तु तथा यजुः
साम तृतीयन्तु ततो भवेत्सा सावित्र्यदेवी स्वयमेव सर्गे ॥
दैवत्यमस्याः सविता सुराच्यं छन्दोऽपि गायत्रमभूच्च तस्य
विश्वस्य मित्रो द्विजराजपुत्रो मुनिर्नियोगस्तु जपादिकेषु
अस्यास्तु तत्वाक्षरविंशतिस्तु चत्वारि पादत्रितयन्तु तस्याः
भूरादिभिस्त्रिभिः संयुक्ता सोङ्कारमेतद्वदनं परस्याम् ॥
केचिद्भुतार्थं वदनवदन्ति सौविभ्नदेव्याः श्रुतितत्त्वविज्ञाः
इमाश्च वक्तुं सकलामराणामित्येतया व्याप्तमशेषमेतत् ॥
भूम्यादिकेन त्रितयेन पादं पादश्च वेदत्रितयेन चास्याः ।
प्राणादिकेन त्रितयेन पादं पादौ त्रिभिर्व्याप्तमशेषमस्याः,

यत्तुर्यमस्या द्विज वेत्ति पादं
स वेत्ति विद्वान् परमं पदन्तु ।
व्याप्तं परस्याः सकलापि चैषा
यो वेत्ति चैनां स तु विप्रमः स्यात् ॥
गायत्रीं यो विजानाति ज्ञात्वा नैव उपासयेत् ।
नामधारकमात्रोऽसौ न विप्रो दृषलोऽपि सः ॥
किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः ।
साङ्गैः सावित्रहीनेन न विप्रत्वमवाप्यते ॥
गायत्रीमेव यो ज्ञात्वा सम्यगभ्यसते पुनः ।
इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात् ॥
गायत्री चैव वेदाश्च ब्रह्मणा तोलिता पुरा ।
वेदेभ्यश्च समस्तेभ्यो गायत्र्यतिगरीयसी ॥
तदक्षरेषु दैवत्यं चतुर्विंशति रुच्यते ।

सन्यासं यद्विबोधेन कुर्वन् ब्रह्मत्वमाप्नुयात् ॥
जानीयादक्षरं देव्याः प्रथमामाशुशुक्षणे।
प्राभञ्जनं द्वितीयन्तु तृतीयं ग्निदैवतम्॥
विद्युतञ्च तुरीयन्तु पञ्चमन्तु यमस्य तु।
षष्ठन्तु वारुणं तत्त्वं सप्तमन्तु हरस्मृतः॥
पार्ज्ज्यन्यमष्टमं तत्त्वं नवमं चन्द्रदैवतम्।
गान्धर्व्वं दशमं विद्यात्त्वष्टुरेकादशं तथा॥
मैत्रावरुणमन्यद्वै पूष्णस्तथा त्रयोदशम्।
चतुर्दशं सुरेशस्य प्रागिदं ब्रह्मणा कृतम्॥
मरुद्देवात्मकं ज्ञेयं पञ्चदशं यदक्षरम्।
सौम्यञ्च षोड़शं तत्त्वं आङ्गिरसमथापरम्॥
विश्वेषाञ्चैव देवानां मष्टादशमथाक्षरम्।
अश्विनो चोनविंशन्तु विंशं प्राजापतीविदुः॥
एकविंशं कुबेरस्य द्वाविंशं शङ्करस्य च।
त्रयोविंशं तथा ब्रह्म चतुर्विंशन्तु वैष्णवम्॥
इति ज्ञात्वा द्विजः सम्यक् स सर्वाक्षरदेवताः।
कुर्वन् जपादिकं कर्म परं श्रेयोऽधिगच्छति॥
पादाङ्गुष्ठादिमूर्द्धान्तं आत्मनो वपुषि न्यसेत्।
अक्षराणि च सर्वाणि प्रपश्यन् ब्रह्मत्वमात्मनः॥
पादाङ्गुष्ठयुगे त्वेकं एकङ्गुल्फद्वयोर्द्वयोः।
जानुनोश्च द्वयोरेकमेकन्तु रेफयोर्द्वयोः॥
गुह्ये कट्यां तथैकैकं एकैकं जठरे रवेः।
स्तनद्वये तथैकन्तु न्यसेदेकं गले तथा॥

वक्रे तालुनि दृक् श्रुत्योः चतुर्ष्वेकैकमेव च ।
भ्रुवोर्मध्ये तथैकन्तु ललाटे चैकमेव हि ॥
याम्यप्रतीचिसौम्येषु एकैक मेकमूर्द्धनि ।
गायत्रीन्यस्तसर्वाङ्गो गायत्री विप्र उच्यते ॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसि ।
यः प्रोक्तोऽक्षरविन्यासो व्याहृतीनामथोच्यते ॥
सप्तापि व्याहृतीर्न्यस्य भवेदर्भो जपादिषु ।
भूर्लोकं पादयोर्न्यस्य भुवर्लोकन्तु जानुनोः ॥
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा ।
जनलोकन्तु हृदये कण्ठदेशे तपस्तथा ॥
भ्रुवोर्ललाटसन्धौ च सत्यलोकः प्रतिष्ठितः ।
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ॥
तच्छुभ्रं ज्योतिषां ज्योति स्तद्यदात्मविदो विदुः ।
देवस्य सवितुर्भर्गो वरणीयञ्च धीमहि ।
तदस्माकन्धियो यस्तु ब्रह्मत्वे च प्रचोदयात् ॥
छन्दोदैवतपंणाञ्च विनियोगञ्च ब्राह्मणम् ।
मन्त्र यस्त्वविधं ज्ञात्वा द्विजः कर्म समाचरेत् ॥
स्वरतो वर्णतश्चैव परिपूर्णं भवेद्यथा ॥
हीनं न विनियुञ्जीत मन्त्रन्तु मात्रयापि च ।
देवतायतने कुर्य्याज्जपं नद्यादिकेषु च ॥
आगमेषु यतीनाञ्च गोष्ठे वा स्वगृहेऽपि वा ।
चतुर्षु नतिपूर्वेषु स्थानमादि क्रमेण तु ॥
दशगुणं भवेत् स्यात् कर्म निष्कामसत्फलम् ।

असमीपे जपं कुर्य्यात् समङ्कर तद्भवेद्यथा ॥
अरङ्कर भासुर यस्मात्तस्मात्तद्गणयेद् ध्रुवम् ।
स्फाटिके द्राक्षरुद्राक्षे पुत्रजीवसमुद्भवे ॥
अक्षमाला प्रकर्त्तव्या प्रशस्ता ह्युत्तरोत्तरा ।
अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिना ॥
यथा कथञ्चिद्गणयेत्सरुङ्कर तद्भवेद्यथा ।
प्रणवो भूर्भुवः स्वश्च पुनः प्रणवसंयुतम् ॥
अत्योङ्कारसमायुक्ता मन्यन्ते कवयोऽपरे ।
प्रणवान्ते तथाचादौ आङ्करन्ध्रे जपे क्रमम् ॥
आदौ चैवन्तु चोङ्कार आरन्तादिकमोऽन्ततः ।
तदाद्यञ्च तदन्तञ्च कुर्य्यात्प्रणवसम्पुटम् ॥
आद्यन्तरचितं कुर्य्यात् इति पाराशरोऽब्रवीत् ।
अक्षरं प्रतिलोपेन सोङ्कारेण क्रमेण तु ।
फुट्कारान्तञ्च कुर्वीत प्रच्छन्नरिपवं बुधः ॥
होमेऽपि च जपं कुर्य्यात् प्रणवावर्जनं द्विजः ।
अभिप्रेतार्थहेमादौ स्वाहान्तं मुदीरयेत् ॥
सङ्कीर्णानां यदा पश्येद्रागाद्वा द्विपतोऽपि वा ।
तदा जपेच्च गायत्रीं सर्वदोषापनुत्तये ।
रुद्राध्यायानि कार्य्याणि सूक्तञ्च पुरुषस्य च ।
शिवसङ्कल्पजप्यञ्च सर्वं कुर्य्याद्विधानतः ॥
घ्नन्ति जप्तानि पापानि श्रेयोदद्युस्तदर्थिनः ।
अतो जपं सदा कुर्य्याद्यदिच्छेच्छुभमात्मनः ॥
द्रुपदा वा जपेद्देवीं मजयाप्यब्युकान्तया ।

प्रणवस्य सदाभ्यस्येद्याति ब्रह्मत्वमिच्छति ॥
प्रणवानामयुक्ताभ्यां तथा षोडशभिः शतैः।
पुमान्निच्छत्यघोरान्तं तन्मह्यामजपा विदुः ॥
रविमण्डलमध्यस्थे पुरुषे लोकसाक्षिणि।
समर्पितमयावेदं सूर्याख्ये ब्रह्मणः पदे॥
न जपः प्रसभं कुर्यात् प्रसभं घ्नन्ति राक्षसाः।
ब्राह्मणा भागधेयस्तु तेषामेवावधीकृताः ॥
उपांशुन्तु जपं कुर्यात् कार्य्यं चैव तु मानसम्।
निवृत्तोष्ठमुपांशु स्यादचलोष्ठं तु मानसम् ॥
द्विविधन्तु जपं कुर्यादुपांशु मानसन्तथा।
उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥
उपांशुजपयज्ञस्य मानसे च रतस्य च।
दृष्ट्वैव याति वेधस्त्वमिति पाराशरोऽब्रवीत् ॥
विधियज्ञाः पाकयज्ञा ये चान्ये बहवो मखाः।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥
जपेनैकेन सिद्धेन किल सिद्धं भवेदिह।
कुर्य्यादन्यं न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥
शतेन जन्मजनितं सहस्रेण पुराकृतम्।
अयुतेन त्रिजन्मोत्थं गायत्री हन्ति पातकम् ॥
दशभिर्जन्मजनितं शतेन तु पुराकृतम् ॥
सहस्रेण त्रिजन्मोत्थं गायत्री हन्ति पातकम्।
अस्मिन् कलियुगे विद्वान्विधिवत्कर्म यत् कृतम् ॥
भवेद्दशगुणं तद्धि कृताद्यैर्युगतो ध्रुवम्।

न च तच्छक्यते कर्तुं मातास्नायस्य भूपणात् ॥
अयथार्थकृतात्पाठान्मन्त्रसिद्धिर्गरीयसी ।
नच मन्त्रोपहसनं स्वपाद्य मवनीकुर्यात् ॥
नान्यसक्तो न तमस्थो न चैवाङ्गं शिरास्तथा ।
नाड्रीणां पादमात्रस्य नन्रैर्षङ्ग तथाकरौ ॥
नैवस्विध जपद्भुर्व्यान्नच सञ्चालयेत्करौ ।
प्रच्छन्नानि च दानानि ज्ञानस्थानिरहङ्कृतम् ॥
जपानि च सुगुप्तानि तेषा फलमनन्तकम् ।
य एवमभ्यसेन्नित्य ब्राह्मण सयतेन्द्रियः ॥
स ब्रह्मलोक माप्नोति तथा ध्यानार्चनादपि ।
अथान्यत्सम्प्रवक्ष्यामि विशेषन्तु पितामहे ॥
लब्धवान्वेधस. एताङ्गायत्रीध्यान मुत्तमम् ।
तदक्षरे तु यद्वर्णा यत्र यत्र च यः स्मरेत् ॥
यत्फल लभते ज्ञात्वा यथा तस्याः समर्चनम् ।
तत्प्रकृतिं न च स्वान्तश्विकारो बुद्धिरेव च ॥
तुरीत्येतदहङ्कारं यत्रव्द विद्धिपापहम् ।
रे सर्गन्तु शिरूप च य.रसहन्धमात्रभम् ॥
गौः श्रोतन्त्येवश्चच् सकार रसना तथा ।
यो नासाच तथा वाग्मी हि हस्तौ च द्विपादुद्वयम् ॥
थ उपस्थ तु दं योन्यो नम प्राकारमारुतम् ।
यो तेजोऽन्नजं यद्वा गायत्रास्तत्वचिन्तनम् ॥
चतुर्विंशतितत्वानामत्येकमचरेषु य ।
गायत्री संस्मरेद्योगान् स याति ब्रह्मण. पदम् ॥

नकारं पादयोर्न्यस्य ब्रह्मविष्णुशिवाकृतिम् ।
शान्तम्पद्मासनारूढन्ध्यानाद्हरति किल्बिषम् ॥
मकारं पादयोर्न्यस्यां अतसीपुष्पसन्निभम् ।
पद्ममध्यस्थितं सौम्यलङ्घ्रेचोपपातकम् ॥
विकारं जङ्घयोर्न्यासिन्ध्यायेदेतद्विचक्षणः ।
ब्रह्महत्याकृतं पापं हन्यात्तद्धि स्मृतः क्षणात् ॥
उकारं जानुदेशे तु इन्द्रनीलसमप्रभम् ।
निर्द्दहेत् सर्व्वपापानि ग्रहरोग मुपद्रवम् ॥
ऊर्वोर्विविमलन्ध्यायेत् शुद्धस्फटिकविद्युतिम् ।
विह्वालं हन्ति तत्पापमगम्यागमन कृतम् ॥
ऐकारं ह्यपणे प्रोक्तं विद्युत्स्फुरिततेजसम् ।
मित्रद्रोहकृतं पाप स्मरणादेव नाशयेत् ॥
शिशुघ्ने श्वेतवर्णं तु जातिपुष्पसमद्युतिम् ।
गुरुहत्याकृतं पापं शोधयेद्ध्यानचिन्तनात् ॥
यद्धध्याः तारका वर्णाश्चन्द्र बधियाद्भूषितम् ।
गोहत्याविहितं पापं शोकारस्य विशोधयेत् ॥
श्याम रक्तश्च देकारन्ध्यानतदेशमाश्रयेत् ।
हृदि कुन्देन्दुवर्णाभम्वकारं मन्त्रतं स्मरेत् ॥
गुरुहत्याकृतं पाप वकारेण प्रणश्यति ।
स्यकारं विन्यसेत्कण्ठे तो च स्फटिक सन्निभम् ॥
मनसोपार्जितं पापं स्यकारेण प्रणश्यति ।
धिकारं वसुदैवत्यं वदन स्वर्णसन्निभम् ॥
मतिदत्तकृत पापन्तमुखाद्देव नश्यति ।

मकारं पद्मरागाभं शिरस्थं दीप्ततेजसम्॥
पूर्वजन्मकृतं पापं मकारेण प्रणश्यति।
शिकारं नासिकाग्रे तु पूर्णचन्द्रसमप्रभम्॥
पूर्वान्यतरं पापं स्मरणादेव नश्यति।
धीकारं तु मोद्गिरसर्वेन्द्रयोर्निन्यसेद्बुधः॥
मनोवाक्कायिकं पापं चिन्तनादेव नश्यति।
योकारं रक्तवर्णाभमिन्द्रनीलसमप्रभम्॥
प्राणिहत्याकृतं पापं योकारेण विनश्यति।
द्वितीयं तु तथा प्रोक्तं योकारं रुक्मसन्निभम्॥
निर्दहेद्दुष्टपापानि अपेयामेयकानि च।
नकारे सुमुखे पूर्वं मादित्योदयसन्निभम्॥
सकृज्ज्ञात्वा द्विजश्रेष्ठः स गच्छेद्दैवं पदम्।
नीलोत्पलदलश्यामं प्रकारं दक्षिणामुखे॥
सकृज्ज्ञात्वा द्विजश्रेष्ठः स गच्छेद्देव पदम्।
सौम्यगोरोचनापीतं चोकारं पश्चिमामुखम्॥
सकृज्ज्ञात्वा द्विजश्रेष्ठः स गच्छेद्ब्रह्मणः पदम्।
शङ्खकुन्देन्दुधवलं दकारं चोत्तरामुखम्॥
सकृज्ज्ञात्वा द्विजश्रेष्ठः स गच्छेद्ब्रह्म शाश्वतम्।
यकारस्तु शिरः प्रोक्तश्चतुर्वदनसंयुतम्॥
यात्कारं सगुणं प्रोक्तश्चतुर्विंशति संस्मृतम्।
यं यं पश्यति चक्षुर्भ्यां यं यं स्पृशति पाणिना॥
यं यं च भाषते चित्ते तत्सर्वं पूतमेव च।
जाप्येत् त्रिपदा ज्ञेया ब्राह्मणैर्नात्र संशयः.

जम्बुका नाम सा देवी यजुर्वेदप्रतिष्ठिता ।
अन्तर्जले त्रिरावर्त्य मुच्यते ब्रह्महत्यया ॥
सा देवी द्रुपदा नाम वेदे वाजसनेयके ।
सोपनीय समस्तानि महतां स द्विजोत्तमः ॥
ब्रह्मणः पदमाप्नोति यद्गत्वा न निवर्त्तते ।
प्रमादेन कथञ्चिद्वा जपं कुर्वन् भवेष्वपि ॥
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः ।
तद्विष्णोरिति मन्त्रोऽयं स्मर्त्तव्यः सर्वकर्मसु ॥
आवर्त्य प्रणवो वापि सर्वस्यादिर्यतोऽहि सः ।
अभ्यसेत्प्रणवान्नित्य मेकचित्तसमाहतः ॥
गायत्री च तथा देवी वैदिकन्तु जपं हियत् ।
पौराणं पाञ्चरात्रं च योऽभ्यसेन्मुक्तिमाप्नुयात् ॥
यद्वेद स्थानि वै तानि यान्येतानि च सा स्मृतिः ।
जपेन येनेष्टजनेन पुंसो ददाति मार्गं सवितापि कर्तुं ।
यथ हि सर्वेष्टकृतास्वरिष्ठोविधेः पदं यास्यति निर्विकल्पः ।
यदुक्तं धर्मशास्त्रेषु तथा सर्वश्रुतिष्वपि ।
उपनिषत्तमन्त्रवत् विप्रहित प्रकीर्त्तितम् ॥
न्यासन्तु तत्त्वं च यत्तदेहे
जग्राह वेद्धारमयीसुतीक्ष्णम् ।
विप्रश्च बध्नात्विपदान्न लोके
मतः स दुष्टः कुनयश्च कुर्यात् ॥
इति श्रीबृहत्पाराशरीये जपनिर्णयः ॥

देवार्चनं प्रवक्ष्यामि यदुक्तं ऋषिभिः पुरा ॥
वैदिकैरेव तन्मन्त्रैर्यस्य एतस्य तैरिति ।
अर्चयेद्वैदिकैर्मन्त्रैर्नानुग्राह्यमुपेक्षते ॥
वैदिकोऽनुग्रहस्तस्य वेदवित्कारणेन तु ।
ब्रह्माणं वैधसैर्मन्त्रैर्वैष्णवैः शङ्करं स्वकैः ॥
अन्यानपि तथा देवानर्चयेत्स्वीयमन्त्रकैः ।
मन्त्रन्यासम्पुरा कृत्वा स्वदेहे देवतासु च ॥
गायत्र्योङ्कारन्यस्ताङ्गः पूजयेद्विष्णुमव्ययम् ।
न्यस्त्वा तु व्याहृतीः कृत्वा प्रेक्षस्थानक्रमेण तु ॥
ब्रह्मीभूतः शुचिः शान्तो देवयागमुपक्रमेत् ।
विष्णुरादित्य देवः सर्वामरगणार्चितः ॥
नामग्रहणमात्रेण पापयोगाद्व्यनक्ति च ।
तदर्चनं प्रवक्ष्यामि विष्णोरमिततेजसः ॥
यद्दृष्ट्वा मुनयः सर्वे विष्णोः सायुज्यमाप्नुयुः ।
पद्मस्थेषु करैस्तस्यार्चनं मुनिभिः कृतम् ॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम् ॥
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ।
आपो ह्यायतनं तस्य तस्मात्तासु सदा हरिः ॥
सर्वगत्वेन विष्णोस्तु स्थण्डिले भावितात्मनाम् ।
दद्यात्पुरुषसूक्तेन आपः पुष्पाणि चैव हि ।
अर्चितं स्यादिदन्तेन नित्यं भुवनसप्तकम् ।
अनुष्टुभस्य सूक्तस्य त्रिभन्तस्य च दैवतम् ॥

पुरुषो यो जगद्बीज ऋषिर्नारायण स्मृतः।
अस्य सूक्तस्य सर्वस्य ऋचा न्यासं यथाक्रमम्।
देवे श्रात्मनि च तथा"सम्प्रदाम्यत परम्।
सून्यासम्पुरा कृत्वा स्मृत्वा विष्णुन्तथाव्ययम्॥
शिरावन्यश्च दिग्बन्ध सौऽर्चयेद्विष्णुमात्मनि।
प्रथमां विन्यसेद्वाम द्वितीया दक्षिणे करे॥
तृतीया वामपादे तु चतुर्थी दक्षिणे न्यसेत्।
पञ्चमी वामजानौ तु षष्ठी च दक्षिणे न्यसेत्॥
सप्तमी वामकक्षायां दक्षिणायान्तथाष्टमीम्।
नवमी नाभिमध्ये तु दशमीं हृदि विन्यसेत्॥
एकादशी वामपादौ द्वादशी दक्षिणे न्यसेत्।
कण्ठे त्रयोदशी न्यस्य तथा वक्त्रे चतुर्दशीम्॥
अक्ष्णो. पञ्चदशी न्यस्य षोडशी मूर्ध्नि विन्यसेत्।
एव न्यासविधि कृत्वा पश्चात् यागं समाचरेत्॥
आसने चिन्तयेन्मेरु मष्टदलं सकर्णिकम्।
व्याहृतीना मथ न्यास कुर्य्यात्तद्विधिवद्द्विजः॥
भूर्लोक पादयोर्न्यस्य भुवर्लोकन्तु जानुनो.।
स्वर्लोक कटिदेशे तु नाभिदेशे रूहस्तथा॥
जनोलोकन्तु हृदये कण्ठदेशे तपस्तथा।
भ्रुवोर्ललाटमध्ये तु सत्यलोक. प्रतिष्ठित.॥
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रज्योतिषा ज्योतिस्तद्यदात्मविदो विदुः॥
आवाहन कुर्य्यात् विष्णोर्निमलात्मनः।

यदर्चासतये तस्य स्वदेहे चिन्तयेद् यथा ॥
आद्य आवाहयेद् देवमृचा च पुरुषोत्तमम् ।
यथादेहे तथा देहे न्यासं कृत्वा विधानतः ॥
द्वितीययासनन्दद्यात् पाद्यन्तु तृतीयया ।
चतुर्थ्यार्घ्यः प्रदातव्यः पञ्चम्याचमनन्तथा ॥
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रधौतकम् ।
यज्ञोपवीतं चाष्टम्या नवम्या गन्ध मेव च ॥
पुष्पन्देयं दशम्यातु एकादश्याच धूपकम् ।
द्वादश्या दीपकन्दद्यात् त्रयोदश्या निवेदनम् ॥
चतुर्दश्याञ्जलिं कुर्यात्पञ्चदश्या प्रदक्षिणम् ।
षोडश्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत् ॥
स्नाने वस्त्रे निवेद्ये च दद्यादाचमनं हरेः ।
षण्मासात्सिद्धिमाप्नोति एवमेव हि योजयेत् ॥
आदित्यमण्डले देवन्ध्यात्वा विष्णुमुपैति यः ।
स याति ब्रह्मणः स्थानं नात्र कार्या विचारणा ॥
ध्येयो दिनेश परिमण्डलमध्यवर्त्ती
नारायण सरसिजासनसन्निविष्ट ॥
केयूरवान्मकरकुण्डलवान् किरीटि-
हारी हरि र्मुनिजनैर्धृतशङ्खचक्रः ॥
सूक्तेन विष्णु विधिना समुदीरितेन
योगेन नित्यमजमादिमनन्तमूर्त्तिम् ।
भक्त्यार्चयेत्प्रति यश्च स विष्णुदेहम्
विप्रो विशेद्धरिवरेण कृतार्थदेहः ॥

पञ्चरात्रविधानेन स्थण्डिले वापि पूजयेत् ।
जलमध्यगतो वापि पूजयेज्जलमध्यग ॥
द्वादशारार्चनव्यूहपञ्चतत्वक्रमेण तु ।
अभावे धौतवस्त्रं पत्रिकायास्तथा द्विज. ॥
जलेऽपि हि जलेनैव मन्त्रैरेवार्चयेद्धरिम् ।
विधानविधित्यंजसस्तु चिन्तयेद्धरिमेव तु ॥
तिष्ठन्व्रजंस्तथासीनः शयानोऽपि हरिं सदा ।
संस्मरन्नाप्नुम पश्येदिहामुत्र च वै द्विज ॥
रुद्रं रुद्रविधानेन ब्रह्माणञ्च विधानतः ।
सूर्यं संहितमन्त्रैश्च तदीरितविधानतः ॥
दुर्गां कात्यायनीं चैव तथा वागदेवतामपि ।
स्कन्दं विनायकञ्चैव योगिनीः क्षेत्रपालकान् ॥
विधानेनार्चयेत्सर्वान्यो विप्रो भक्तितत्परः ।
विष्णुना सुप्रसन्नेन विष्णोर्लोकमवाप्नुयात् ॥
गृहाद्य पूजयेद्विद्वान् ब्राह्मण शास्त्रतत्परः ।
आरोग्यपुष्टिसंयुक्तो दीर्घमायुष्यमाप्नुयात् ॥
यद्वा गावो सुरा विप्राः सद्भिः पूज्याः सदा द्विजैः ।
पूजिताः पूजयन्त्येते दहन्ति चापमानिताः ॥
यो हितः सर्वसत्वेषु गोसुरब्राह्मणेषु च ।
इहामुत्र स पूज्योऽसौ विष्णुलोकमवाप्नुयात् ॥
प्रोक्तो गृहस्थस्य सुरार्चनस्य
धर्मो विधिर्विष्णुजनस्य सम्यक् ।
कार्यो द्विजातिः प्रतिवासरं यो

वेदोक्तमन्त्रैः समये हिताय ॥
देवपूजाविधिः प्रोक्त एष उद्देशतो मया ।
वैश्वदेवस्य वक्तव्यो विधिर्विप्र ! मयाधुना ॥
इति बृहत्पाराशरीये धर्मशास्त्रे देवपूजाविधिः समाप्तः ॥



वैश्वदेवं प्रवक्ष्यामि यथाकार्यं द्विजातिभिः ।
स्वगृह्योक्तविधानेन जुहुयाद्वैश्वदैवकम् ॥
हविष्यस्य द्विजोऽभावे यथालाभकृतं हविः ।
जुहुयाद्विधिवद्भक्त्या यथा स्याच्चित्तनिर्वृतिः ॥
यद्वा तदापि होतव्यमग्नौ किञ्चिद्द्विजातिभिः ।
फलम्वा यदिवा मूलं शाकम्वा यदिवा पयः ॥
अहुत्वा च द्विजोऽश्नीयाद्यत्किञ्चित् स्वयमर्जितं ।
अश्नीयाच्चेदहुत्वापि नरकं स समाविशेत् ॥
जुहुयादन्नमक्षारलवणं हुताशने ।
अनुज्ञातो द्विजैस्तैस्तु त्रिः कृत्वा पुरुषर्षभः ॥
यदाग्नौ हूयते नैव यस्य ग्रासो न दीयते ।
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत् ॥
लौकिके वैदिके चैव वैश्वदेवो हि नित्यशः ।
लौकिके पापनाशाय वैदिके स्वर्गमाप्नुयात् ॥
अभावादग्निहोत्रस्य आवसथ्यस्य वा तथा ।
अस्मिन्नग्नौ पचेदन्नं तत्र होमो विधीयते ॥

अग्नि. सोम: समस्तौ तौ विश्वदेवास्तथैव च।
धन्वन्तरिं कुहूश्चैवानुमतः प्रजापतिः॥
द्यावाभूम्योः सृष्टिकर्त्रे कृत्वा तेभ्य पुन. पुन:॥
कुर्याद्बलिकृतं यथावत्सर्वदिक्षु मरुद्गणाम्।
सूत्राग्लैसाय पुष्यंच यमाय च सहानुगैः॥
मरुद्भ्य क्षिपेद्वारि अप्सरोभ्यस्तथा हरेः।
वनस्पतिभ्य सर्वेभ्यो मुसलोलूखले हरेत्॥
श्रियै च भद्रकाल्यै च उष्णीषपादयोः क्रमात्।
ब्रह्मणे सानुगायेति मध्ये चैव हरेद्बलिम्॥
वास्तवे सानुगायेति वास्तुमध्ये बलिं हरेत्।
विश्वेभ्यश्चैव देवेभ्यो बलिमाकाशमुत्क्षिपेत्॥
द्युचरेभ्यश्च भूतेभ्यो नक्तचारिभ्य एव च।
वास्तुपृष्ठे च कुर्वीत बलिं सर्वान्न भूतये॥
पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत्।
पतितेभ्य श्वपाकेभ्यः पापानां पापरोगिणाम्॥
कृमिकीटपतङ्गानां सर्वेभ्योऽपि बलिं हरेत्।
एवं सर्वाणि भूतानि यो विप्रो नित्यमर्चयेत्॥
तत्स्थानं परमाप्नोति यज्ज्योतिः परवेधसः।
गृह्योऽग्नौ वैश्वदेवन्तु प्रोक्तमेतन्मनीषिभिः॥
अनग्निकस्तु कुर्वीत वैश्वदेवं कथं त्विति।
महाव्याहृतिभिस्तिस्रः समस्ताभिस्तथा परा॥
इत्याहुतीश्चतस्रस्तु तथा वेदकृतोऽपि च।
त्रियम्बकं यजामह इत्यादीनाहुतिद्वयम्॥

वैश्वदेवेच जुहुयाद्विशेषोऽन्यत्र वै पुनः ।
अल्पमृत्युनिवृत्त्यर्थमायु पुष्टिविवृद्धये ॥
जुहुयात् त्र्यम्बकं देव बिल्वपत्रैस्तिलैस्तथा ।
विनायकाय होतव्या तथा ह्यतस्रो चाहुतिः ॥
सर्वविघ्नोपशान्त्यर्थं पूजयेत्सन्ततस्तुतम् ।
गणानान्त्वितिमन्त्रेण स्वाहाकारान्तपादतः ॥
चतस्रो जुहुयात्तस्मै गणेशाय तथाहुती ।
तद्विष्णोरिति जुहुयाद्विधिसम्पूर्णताकृते ॥
प्रणवेन च गायत्र्या केचिज्जुह्वति-सद्द्विजाः ।
एतौ वै सर्वदेवत्यौ एतत्परन्न किञ्चन ॥
एताभ्यां जुह्वते नैव सर्वेभ्योऽपि हुतम्भवेत् ।
जुहुयात्सर्पिषायुक्तं सव्येन पयसाथ वा ॥
क्षीरेण च विकारैश्च तिलतैलेन वा पुनः ।
समोप्य पयसा वापि अन्नन्तु जुहुयादपि ॥
व्रीहयश्चापि गोधूमाः शालयो हवनीयकाः ।
हविस्तु हविरभ्युक्तमहविस्तु हविर्यतः ॥
अभ्युक्तमेव होतव्यं मृतोक्तञ्च विवर्जयेत् ।
हरिद्राखिलितामेके कृत्वान्नहवने विदुः ॥
उदगग्ने चारभ्यैके कृत्वासनमिहोच्यते ।
ॐकारपूर्विकाः सर्वाः स्वाहाकारान्तिकास्तथा ॥
जुहुयादग्निको विप्रो ह्यहमेधीह नित्यशः ।
बलिशेषञ्च भूतेभ्यः सर्वेभ्योऽप्यविशेषतः ॥
हुत्वाथ सप्तमर्मान कृताञ्जलि प्रसादयेत् ।
तमग्ने । त्वदितेन मन्त्रेण भक्तिमान् द्विजः ॥

आनन्दाभिति मन्त्रन्तु जपेद्वै सर्वकामिकम् ।
अहाव्यग्न इति ह्येत मन्त्रञ्च प्रयतो जपेत् ॥
अन्यदीताग्न मन्त्रं जपित्वा च समापयेत् ।
सर्वशान्तिकरन्त्वेषं तयाग्निर्देवनेति च ॥
भान धनमरोगित्व गतिमिच्छं स्तथा द्विजः ।
यमुमग्नि रविं विष्णु मर्चयेद्धक्तितः क्रमात् ॥
अजानन् यो द्विजोनित्य मद्दत्वा निसृत हवि ।
पितृदेवमनुष्याणां स्वणत्युक्त प्रयात्यधः ॥
शाकञ्चापि तथा वापि हुत्वाग्नावश्नुते द्विजः ।
सर्वकामसमायुक्त. सोऽत्रैव सुखमश्नुते ॥
स्वरेण वर्णेन च यद्विहीन तथैव हीनं क्रययापि यच्च ।
तथातिरिक्त मम तत् चमस्व तदस्तु चाग्नेः परिपूर्णमेतत् ॥
सर्वपापप्रमोदाय सर्वकामाय वै द्विज ।
द्विजन्मना हितार्थाय वैश्वदेव उदाहृतः ॥
इति श्रीबृहत्पाराशरे वैश्वदेवविधिः ॥

---

आतिथ्य संप्रवक्ष्यामि चातुर्वर्ण्य फलप्रदम् ।
चतुर्वर्णातिथि. प्रोक्त. कालप्राप्तो बहुश्रुत. ॥
अदृष्टो दृष्टगोत्रादिरज्ञाताचारविग्रह: ।
सन्ध्यामात्रकृताचारस्तज्ज्ञैः सोऽतिथिरुच्यते ॥
क्षुत्तृष्णाध्वश्रमश्रान्त प्राणत्राणाय याचक. ।
गृहिणो वैश्वदेवान्ते त्वग्द्वारमुपागत. ॥
विष्णुरूपोऽतिथिः सोऽयं सत्कारार्थमिहागतः ।
इति मत्वा भक्त्या च यथायोग्यं तमागतम् ॥

त्वं शुभेन समायात. सर्वदेवमयो विधि.।
निर्दह्य सर्वपापानि ममाचाद्य प्रयास्यति॥
ब्राह्मणै सह भोक्तव्यो भक्त्या प्रक्षाल्य पादयम्।
आसनार्घादिकं दत्त्वा दत्त्वा स्रक्‌चन्दनादिकम्॥
योगिनो विविधैर्वेषैर्भ्रमन्ति धरणीतले।
नराणामुपकाराय ते चाज्ञातस्वरूपिणः॥
तस्मादभ्यर्चयेत्प्राप्तं श्राद्धकालेऽतिथिं द्विजः।
श्राद्धक्रियाफलं हन्ति तत्र यत्पूजितोऽतिथिः॥
तस्मात्पूर्वमेवात्र पूजयेदागतोऽतिथिः।
यदा चित्कचिदागच्छेत्तारयेत्तस्य पूर्वजान्॥
यतिर्वा ब्रह्मचारी च तथापि मधुकद्विजः।
सदैतेऽतिथयः प्रोक्ता अपूर्वश्च दिने दिने॥
अतिथेरस्य देहस्य सत्तार्थमिहागतः।
संसारमहालग्नं मा मुदरसाधनायने॥
नैक ग्रामे वसन्वीह मुनीगैरव्यपेः तिथिः।
अन्यत्र दृष्टपूर्वोऽपि नासावतिथिरुच्यते॥
क्षत्रियो यदि वा गच्छेदतिथिश्चास्य वेश्मनि।
भक्ते तु सत्सु विप्रेषु कामतस्तु समाश्रयेत्॥
वैश्यो वा यदि वा शूद्रो विप्रगृहं समाव्रजेत्।
तो भृत्यैः सह भोक्तव्यो इति पाराशरोऽब्रवीत्॥
क्लीबो वा यदि वा काण. कुष्ठी वा व्याधितोऽपि वा।
आगतो वैश्वदेवान्ते प्रष्टव्यः सर्वदेवताः॥
दर्शनेनापि वैश्येन तथा च हपलेन च।
आतिथ्यं सर्ववर्णानां कर्तव्यं श्राद्धसंश्रयम्॥

योऽतिथीन्पूजयेद्भक्त्या तथाभ्यागमनेन च ।
बालवृद्धादिकश्चैव तस्य विष्णुः प्रसीदति ॥
देवा मनुष्याः पितरश्च सर्वे सूर्येण दृष्टेन च भूरि तिष्ठन्
तस्मान्ददातुस्त्वमराङ्गनाभिस्तस्यातिथिः केन समस्त्वमस्ति ।
इति श्रीबृहत्पाराशरे चातिथिविधिः समाप्तः ॥

---

वर्णधर्मान् प्रवक्ष्यामि यत्कृतं ब्राह्मणादिभिः ।
निबोधध्वं द्विजास्तद्वै सचेष्टेण पृथक् पृथक्॥
यजने याजने विप्रे तथा दान प्रतिग्रहे ।
अध्यापन मध्ययनं कर्माण्येतानि षट् तथा ॥
प्रजाना रक्षणं दान शरीर्या निग्रहस्तथा ।
यजनाध्ययने राज्ञि विषयासक्तिवर्जनम् ॥
यजनाध्ययने दानं पाशुपाल्यस्तथा कृषी ।
वाणिज्यश्च कुसीदश्च कर्मषट्क प्रकीर्त्तितम् ॥
शुश्रूषा ब्राह्मणादीना तेभ्य आजीवनस्तथा ।
एष धर्मः स्मृत शूद्रे वाणिज्येन च जीवनम् ॥
सर्वेषां जीवन प्रोक्त धर्मेणैव च सर्वशः ।
भिन्नवृत्तिर्यथा न स्यात् कुर्य्याद्विप्रस्तथा च तत् ॥
कुर्वन्नन्यानि कर्माणि हत्या वा क्षत्रियस्य च ।
तदभावे द्विजो जीवेद्विन्नवृत्ति विवर्जयेत् ॥
क्षत्रिये प्रजापालत्व शस्त्रभृत्त्वं प्रचण्डता ।
निर्जयेत्परसैन्यानि एष धर्मः स्मृतो नृप ॥
पुष्पपुष्प विचिनुयान्मूलच्छेद न कारयेत् ।
मालाकार इवारामे प्रजासु स्थाप्यया नृप ॥

लोहकर्मरथानाश्च गवाञ्च प्रतिपालनम् ।
गोरक्षा कृषिवाणिज्यं वैश्यवृत्तिरुदाहृता ॥
शूद्रस्य द्विजशुश्रूषा परोधर्मः प्रकीर्त्तितः ।
अन्यथा कुरुते यस्तु तद्भवेत्तस्य निष्फलम् ॥
लवणं मधु तैलञ्च दधि तक्रं घृतं पयः ।
न दूष्येच्छूद्रजातीनां कुर्य्यात् सर्व्वस्य विक्रियाम् ॥
विक्रयं मद्यमांसानां मभक्ष्यस्य च भक्षणम् ।
अगम्यागामिता चौर्य्यं शूद्रे स्युः पापहेतवः ॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रस्य नरकं ध्रुवम् ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

अतः परं गृहस्थस्य कर्माचारं कलौ युगे ।
धर्मसाधारणं शक्त्या चातुर्वर्ण्यक्रमागतम् ॥
युष्माकं सम्प्रवक्ष्यामि पाराशरप्रचोदितम् ।
षट्कर्मसहितो विप्रः कृषिवृत्तिं समाश्रयेत् ॥
हीनाङ्गं व्याधिसंयुक्तं प्राणहीनञ्च दुर्बलम् ।
क्षुद्युक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत् ॥
स्थिराङ्गं नीरुजं तृप्तं शान्तं षण्ढविवर्जितम् ।
धर्मिष्ठं सप्तमायं सनड्वाहं न वाहयेत् ॥
वाहयेद्दिवसस्यार्धं पश्चात् स्नानं समाचरेत् ।

कुशवैर्न क्वापि कुर्य्यात्सर्वथा धेनुसंग्रहः ॥
बन्धनं पालनं रक्षा द्विजः कुर्य्याद्गृही गवाम् ।
वत्साश्च यत्नतो रक्ष्या वर्धन्ते ते यथाक्रमम् ॥
न दूरे तास्तु मोक्तव्या चरणाय कदाचन ।
दूरे गावश्चरन्त्यो वै न भवन्ति शुभायना: ॥
प्रातरेवहि दोग्धव्या दुग्धाः सायं तथा गृही ।
दोग्धुर्विपर्य्ययेणैव वर्द्धन्ते ताः कदाचन ॥
अनादेयतृणान्यत्त्वा स्रवन्त्यनुदिनं पयः ।
तुष्टिश्चदेवतादीनां पूज्या गावः कथन्न ताः ॥
यस्याः शिरसि ब्रह्मास्ते स्कन्धदेशे शिवः स्मृतः ।
पृष्ठे विष्णुस्तथा तस्थौ श्रुतयश्चरणेषु तु ॥
या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिताः
सर्वे देवमया गौस्तु तुष्येत्तद्भक्तितो हरिः ॥
हरन्ति स्पर्शनात्पाप पयसा पोषयन्ति याः ।
प्रापयन्ति दिवं दत्ताः पूज्या गावः कथन्न ताः ॥
यच्छफाहतभूमेस्तु उद्धताः पांशुसंस्पृशः ।
प्रीणयेत् पुरुपश्चैनो वन्द्या गावः कथन्न ताः ॥
शकृन्मूत्रं हि यस्यास्तु पितुः पुनाति पातकम् ।
किमपूज्यं हि तस्या गौरिति पाराशरोऽब्रवीत् ॥
गौरवत्सा न दोग्धव्या नचैवं गर्भसन्धिनी ।
प्रसूता च दशाहार्वागदोग्धा चेन्नरकं व्रजेत् ॥
दुर्बला व्याधिसयुक्ता पुष्पिता या द्विवत्सभूः ।
सा साधुभिर्न दोग्धव्याग्रर्थिभिः सुप्रमीप्सुभिः ॥

कुलान्ते पुष्पिता गावः कुलान्ते बहवस्तिला।
कुलान्ते चलचित्ता स्त्री कुलान्ते बन्धुविग्रहः॥
एकतः पृथिवी सर्वा सशैलवनकानना।
तथा गौ र्ज्यायसी साक्षादेकतोऽभ्यधिकोऽसुखी॥
यथोक्तविधिनायैता स्त्रीः पाल्यास्तु पूजिताः।
पा तये रपूजयन्नेताः सप्तमेऽह च मोदते॥
दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि।
वन्दनीयास्तथैतास्तु न च प्राक्पश्चिमामुखा॥
गोदृष्टा वाजिशालाया सुतीक्ष्णं लोहदात्रकम्।
स्थाप्य तु सर्वदा तस्यां गवि लुप्तविमोक्षणात्॥
गावो देयाः सदा रक्ष्याः पोष्याः पाल्याश्च सर्वदा।
ताडयन्ति च ये पापा येचाकर्षन्ति ता नराः॥
नरके पच्यन्तेऽङ्गानि श्वासेनैव प्रपीडिताः।
स पशुधर्मं दण्डेन सह तासां निवर्त्तयेत्॥
गच्छ गच्छेति ता ब्रूयान्मा भैरिति वारयेत्।
सम्पूजयन् गा नमस्कृत्य कुर्य्यात्तान्तु प्रदक्षिणम्॥
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा।
तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम्॥
सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः।
पृथिव्यां यानि तीर्थानि समुद्राश्च सरांसि च॥
गवां शृङ्गोदकस्नाने कलां नार्हन्ति षोडशीम्।
कृतस्तेयां हि पापानि येषां गवां मलद्रुतम्॥
सततं बालवत्साभिर्गोभिः स्त्रीभिरिव स्वयम्।
माघ्रयाश्चैव गावश्च कुम्भमेकं दिधा शतम्॥

तिष्ठन्त्येकत्र मन्त्राणि हरिरेकत्र तिष्ठति ।
गोभिर्यज्ञाः प्रवर्तन्ते गोभिर्देवाः प्रतिष्ठिताः ॥
गोभिर्वेदाः समुद्गीर्णाः सषडङ्गपदक्रमात् ।
सौरभेयास्तु तस्याग्रे पृष्ठतोऽप्यस्य ताः स्थिताः ॥
वसन्ति हृदये नित्यन्तासां मध्ये वसन्ति ये ।
ते पुण्यपुरुषाः सौम्या नाकेऽपि दुर्लभाश्च ये ॥
शृङ्गमूले स्थितो ब्रह्मा शृङ्गमूले तु केशवः ।
शृङ्गाग्रे शङ्करं विद्यात्त्रयो देवाः प्रतिष्ठिताः ॥
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च ।
सर्वे देवाः स्थिता देहे सर्वदेवमया हि गौः ॥
ललाटाग्रे स्थिता देवी नासामध्ये तु षण्मुखः ।
कम्बलाश्वतरौ नागौ तत्कर्णयोर्व्यवस्थितौ ॥
स्थितौ तस्याश्च सौरभ्याश्चक्षुषोः शशिभास्करौ ।
दन्तेषु वसवश्चाष्टौ जिह्वायां वरुणः स्थितः ॥
सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः ।
ऋषयो रोमकूपेषु प्रस्रावे जाह्नवीजलम् ॥
कालिन्दी गोमये तस्या अपरा देवतास्तथा ।
अष्टाविंशतिदेवानां कोट्यो लोमसु ताः स्थिताः ॥
उदरे गार्हपत्योऽग्निर्हृदये दाक्षिणस्तथा ।
मुखे चाहवनीयस्तु चावसथ्यौ च कुक्षिषु ॥
एवं यो वर्त्तते गोषु ताडनक्रोधवर्जितः ।
महतीं श्रियमाप्नोति स्वर्गलोके महीयते ॥
कृत्यं तस्या न लङ्घेत पूतिगन्धं न वर्जयेत् ।
यावत्पिबति तद्गन्धं तावत्पुण्यं प्रवर्धते ॥

यो गां पयस्विनीं दद्यात्तरुणीं वत्ससंयुताम् ।
शिवस्यायतनं दत्त्वा दत्तन्तेन तु विश्वकम् ॥
उक्ता गौर्वेधसा सृष्टा तस्याः सम्पादनाय च ।
तैरुत्पादितशस्येन सर्वमेतद्धि धार्यते ॥
यस्त्वेतान् पालयेत् यत्नान्सुधैर्यैश्चैव यत्नतः ।
जगन्ति तेन सर्वाणि साक्षात् स्युः पालितानि च ॥
यावद्गोपालने पुण्यमुक्तं पूर्वमनीषिभिः ।
उक्ष्णोऽपि पालने तेषां फलं दशगुणं भवेत् ॥
जगदेतद्धृतं सर्वमनडुह्ना चराचरम् ।
इय एत्तावतो रक्षा पालनीयस्तु सर्वदा ॥
धर्मोऽयं भूतले साक्षाद्ब्रह्मणां हितकारिताः ।
त्रैलोक्यं धारणायालमन्नानाञ्च प्रसूयते ॥
अनादेयानि घासानि विश्व सन्ति समासतः ।
भ्रमिता भूतले दूरमुक्षाणो न पूजयेत् ॥
उत्पादयन्ति शस्यानि मर्दयन्ति वहन्ति च ।
आनयन्ति दवीयस्य मुक्ष्णोर्वा कोऽधिको भुवि ॥
कन्धेन दूराच्च वहन्तिभारं साक्षादि किञ्चिद्धनपत्युरस्य ।
स्वीयेन जीवेन परस्य जीवं रक्षन्ति पुष्णन्ति विवर्धयन्ति ॥
पुण्यास्तु गावो वसुधातले मां बिभ्रत्यमुष्टोष्टगर्भभारम् ।
भारः पृथिव्या दशताड़िताया एकस्य चाण्णो ह्यपि साधुवाच ॥
एकेन दत्तेन वृषेण येन दत्ता भवेयुर्दश सौरभेयाः ।
माहेश्वपीयं धरणीं समाना तस्माद्वृषात् पूजितमस्ति चान्य ॥
उत्पाद्य शस्यानि तृणाश्चरन्ति तदेव भूयः सकलं वहन्ति ।
र भारखिन्नाः प्रमर्दन्ति किञ्चिद्दोह्याद्धार्यति जीवलोकः ॥

तृतीयेऽह्नि चतुर्थे वा यद्देवोक्ता दृढोभवेत् ।
तदा न स्नातु भेतव्या नैव प्राग्दुर्बलस्य च ॥
नामतेवेनकीलन्तु खादिरं वाथ सैंशिपम् ।
द्वादशाङ्गुलं कुर्य्यात्तज्जैस्तीर्णे समेच वा ॥
शाला द्विजेन्द्रा वृषगोष्ठयाना ता याम्यदिग्द्वारवती विदध्यात्
सौम्या ककुप्द्वारवती सुशोभान्तेषा शमिच्छन् धृतमात्मनश्च
गावो वृषो वा हयहस्तिनोवा अन्येऽपि सर्वे पशवो द्विजेन्द्रा
याम्या मुखा दिक्षु च मुत्तरादिङ्मुखाश्चकास्ते खलु बन्धनीया
शालामवेशे वृषगोपशूनां राजापि यस्माद्धयकुञ्जराणाम् ।
होमञ्च सप्तार्चिषि शास्त्रयुक्तं कुर्य्याद्विजस्तो द्विजपूजनञ्च ॥
लाङ्गलं यत्प्रवक्ष्यामि यत्काष्ठं यत्प्रमाणतः ।
हलीशायास्तथामानं प्रतोदस्य युगस्य च ॥
चत्वारिंशत्तथाचाष्टा वङ्गुलानि कुचः स्मृतः ।
अथाहंमिद्धजैर्भोज्यो हलीषा वेधतश्च यः ॥
षोडशैव तु तस्याश्च षड्विंशति तथोपरि ।
वेधस्तथाच कर्त्तव्यः प्रमाणेन षडङ्गुलः ॥
अष्टाङ्गुलमुरस्तस्य वेधादूर्द्धं प्रकल्पयेत् ।
ग्रीवा दशाङ्गुला चोर्द्धं हस्तशाखी ततः स्मृतः ॥
अङ्गुलेष्वाष्टभिस्तत् स्याद्वेध स्यात्प्रतिहारकः ।
तस्याधस्ताच्चत्वारि स वेधश्चतुरङ्गुलः ॥
सार्द्धं तद्वै शुभा कार्य्या तद्वेधस्त्र्यङ्गुलो भवेत् ।
पञ्चाङ्गुलमुरस्तस्याः शिरश्चेति विभाजनम् ॥
पृष्ठत्वं शिरसोधार्य्यं हस्ततलप्रमाणकम् ।
अङ्गुलानि तथा चाष्टौ लरम प्रथता स्मृता ॥

बन्धाद्दक्षिः प्रतीहारी पङ्क्ति यदङ्गुला भवेत् ।
सुतीक्ष्णे लोहपाल्यस्य सुकादामादिद्वारकम् ॥
नगर चौरष्टचस्य न पिल्लपिचुमर्दयोः ।
दूल्यादीना हि कुर्व्वाण न नन्दति चिरं गृही ॥
प्राञ्जला समदक्षा तु हलीषा विदुषा मता ।
तस्य वेधः सवर्णाया कार्य्यो नवषितस्तिभिः ॥
प्लक्षास्रयोर्न तत्कुर्य्यात् कीर्त्तिघ्नौ तौ प्रकीर्त्तितौ ।
प्रमादतस्तु तां कुर्वन् समस्तो नश्यते गृही ॥
नीचोच्चत्वप्रमानेन तज्ज्ञास्तां प्रवदन्ति हि ।
चतुर्हस्तं युगं कार्य्यं स्कन्धस्थानेऽर्धचन्द्रवत् ॥
शेषन्त्वङ्ग्या कदम्बस्य शालाधन्यतमस्य च ।
सम्या वेधाद्दकिः कार्य्या दशाङ्गुलप्रमाणिका ॥
तन्माने च प्रवालीच तदन्तरदशाङ्गुलम् ।
प्रतोदविषमग्रन्थि वैणवश्च चतुः करः ॥
तदग्रे तु प्रकर्त्तव्या यवाकारातु लोहवत् ॥
हीनातिरिक्तं कर्त्तव्यं नैव किञ्चित्प्रमाणतः ।
कुर्य्यादनड्गुहा दैव्याददैव्या नरकं व्रजेत् ॥
यथा भीष्टं तथा शोभं वाहकस्य प्रमाणत ।
भूमेश्च कर्षणायालं तज्ज्ञा सर्ववदन्ति हि ॥
योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा ।
श्रेष्ठनक्षत्र संयुक्ते पुण्येऽह्नि तद्विधीयते ॥
यत्र दिने तु बुध्येत तत्र कार्य्यं विजानता ॥
यत्र हृत्यं हितं चापि पुण्यं वा मनसि स्मरेत् ।
तत्र विद्वान् द्विजश्रेष्ठ पुण्येऽह्नि तद्विधीयते ॥

मात्स्याद्द्विज कृत्वा यथोक्तविधिना गृही।
द्रव्यकालानुसारेण कुर्वतो धर्मतः कृषिम्॥
प्रोल्लिखन् मण्डलं पुष्पधूपदीपैः समर्चयेत्।
इन्द्राय च तथाग्निभ्यां मरुद्भ्यश्च तथा द्विज॥
कुर्य्याद्बलिं स्मृतिं विद्वान् उदलयाश्वयाय च।
तथा कुमार्य्यै सीतायै अनुमत्यै तथा बलिम्॥
नमः स्वाहेति मन्त्रेण सर्वावन्वात्मनः शुभम्॥
दधिगन्धाक्षतापुष्पैः शमीपत्रैस्तिलैस्तथा।
दद्याद्बलिं हयाणाञ्च तथाव्यप्राशनं तथा॥
सद्यश्च शिरफालाग्रे हेम्ना वा राजतेन वा।
प्रलेप्य मधुसर्पिभ्यां कुर्य्याच्चैव प्रदक्षिणम्॥
प्राच्योदीच्यां मण्डलं कुर्य्यात् सत्वा सीरप्रवाहणम्।
पुष्पं लाङ्गलकल्याण कल्याणाय नमोऽस्त्विति॥
सीतायाः स्थापनं कुर्य्यात् पाराशरऋषिं स्मरेत्।
सीता युञ्जन्त इत्याद्यैर्मन्त्रैर्धीरं प्रवाहयेत्।
दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुष्पदे॥
सीता पूज्य वनौ भक्तोऽस्तु वस्त्रविशारदौ।
सप्त धान्यानि चादाय प्रोक्ष्य पूर्वामुखो हली॥
तानि दक्षिणेन चैवं किरन् भूमौ कृषिद्विजः।
न यवैर्न तिलैर्हीन द्विज कुर्य्याद्धि कर्षणम्॥
तद्विहीनस्तु कुर्वाणो न प्रशंसन्ति देवताः।
तिलमात्रच्युतं तोयं दक्षिणस्याम्पतर्दिशि॥
तेन तृप्यन्ति पितरो यावन्त तिलविन्दवः।
[illegible]

विमुच्य पितरस्तत्र प्रयान्तीव तिलैः सह।
स्नानाजलं यवस्तस्य पतत्येभ्यो भूतले पतत्॥
पयोदधिघृताद्यैश्च तर्पयेत्सर्वदेवता।
देवपर्जन्यभूमीरयोगात् कृषिः प्रजायते॥
व्यापारात् पुरुषस्यापि तस्मात्तत्क्रियतो भवेत्।
शालीन् भूयवकार्पासं माषांकुमश्वतीनि च॥
वापयेत्सर्वबीजानि सर्वशापो न सीदति।
चन्द्रक्षये यतिर्विप्रो यो युनक्ति हयान् क्वचित्॥
तत्पशुदशवर्षाणि त्यजन्ति पितरो हि तम्।
चन्द्रक्षये द्विजो विद्वान्यो भुङ्क्ते तु परान्नम्॥
भोक्तुर्मासार्जितं पुण्यं अन्नेदस्य तत्।
चन्द्रार्कयोस्तु संयोगे कुर्याद्यः स्त्रीनिषेवणम्॥
स रेतोभोजिनस्तस्य पक्षमात्रं पितरो द्विजा।
चन्द्रक्षये च यः कुर्यात्तस्यतन्निकृन्तनम्॥
तत्पर्णसङ्ख्या तस्य भवन्ति भ्रूणहत्यकाः।
वनस्पतिगते सोमे यो ध्यान् प्रक्षेपर॥
प्रभ्रष्टद्विजकर्माणां न त्यजन्त्यमरादय।
वासांसि दुःप्रणाशाय रजकस्य महि क्षिपेत्॥
पिबन्ति पितरस्तस्य मास वस्त्रजलन्तु तत।
सोमक्षये द्विजो याति तत्कायस्तु कृतीयकम॥
तदेव पितृशापाग्निदग्धो नरकं समाविशेत।
अष्टमी कामभोगेन षष्ठी तैलोपमं तिना।
कुहूश्च दन्तकाष्ठेन हिनस्त्यासप्तम कुलम्।

चन्द्रार्कप्रणीताः पुरुषास्तु देवा दद्याद्यत्या यदि दन्तकाष्ठम्
नराधिराजः सहितस्तु तेन यातः क्रतः स्यात्त्रिदशदेवतानाम्।

तत्राश्र्यंच्य विधारणानि गावश्चैव तृषास्तथा।
चरणाय विसृज्यन्ते आगतांस्त्रिश्च भोजयेत्॥
य उत्पाद्यैह प्रस्थानि सर्वाणि लुप्तचारिणः।
जगत्सर्वं धृतं येस्तु पूज्यन्ते किन्न ते हया॥
येनैवोक्त प्रदत्तेन दत्तं गोदशकम्भवेत्।
यद्रूपेण स्थितो धर्मः पूज्यन्ते किन्न ते हयाः॥
पाल्याहि यत्नतस्ते वै वाहनीया यथाविधि।
स याति नरकं घोरं यो वाह्यत्यपालयत्॥
नाधिकाङ्गो न हीनाङ्गः पुष्पिताङ्गो न दूषितः।
वाहनीयो हि शूद्रेण वाहयन् शुभमाप्नुयात्॥
वर्जयेद्दुष्टदोषाश्च गावो वै दोहने नरः।
पाल्या वै यत्नतः सर्वे पालयन् शुभमाप्नुयात्॥
अन्नार्थं सेतांसुधायाः समर्जं परमेश्वरः।
अन्नेनाप्यायते सर्वं त्रैलोक्यं सचराचरम्॥
अग्निर्ज्वलति चान्नार्थं वाति चान्नाय मारुतः।
गृह्णाति चाम्भसा सूर्यो रसानन्नाय रश्मिभिः॥
अन्नं प्राणो बलं चान्नं महाज्जीवित मुच्यते।
अन्नं सर्वस्य चाधारः सर्वं सन्ने प्रतिष्ठितम्॥
सुरादीनां हि सर्वेषां सम बीजं परं स्थितम्।
तस्मादस्मात्परं तत्त्वं न भूतं न भविष्यति॥
द्यौः पुमान्धरणी नारी अग्नीषोमीनन्दिमन्द्रतम्।
द्युधात्री नौदसयोगादन्यादीनां हि सम्भवः॥

आपोमूलं हि सर्वस्य सर्वमप्सु प्रतिष्ठितम्।
आपोऽमृतरसो ह्याप आपः शुक्रं बलं महः॥
सर्वस्य बीजमापो वै सर्वमद्भिः समाहृतम्।
आद्य आप्यायना ह्यापः आपो ज्येष्ठतरा ह्यतः॥
किञ्चित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः।
न जीवन्ति विना तानि तस्मादापोऽमृतं स्मृतम्॥
दत्तानि चाद्भिरेतस्यां किं न दत्तं क्षितौ भवेत्।
तथान्नेन प्रदत्तेन सर्वं दत्तं भवेदिह॥
अतोऽप्यन्नार्थभावेन कर्त्तव्यं कर्षणं द्विज।
यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम्॥
सीते! सौम्ये! कुमारि! त्वं देवि! देवार्चिते! श्रिये!
सत्कृतासि यथा सिद्धा तथा मे सिद्धिदा भव॥
सक्तत् सूनाविना नाम्ना सीतया, स्थापनं विना।
विनाऽभ्युक्षणरक्षार्थं सर्वं हरति राक्षसः॥
वापने लवने चैव खले गन्धोपवाहने।
एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने॥
देवतायतनोद्याननिपातस्थानगो व्रजन्।
सीमा श्मशानभूमिश्च वृक्षच्छाया चिति तथा॥
भूमिं निखातयूपाश्च शयनस्थानमेव च।
अन्यामपि हि चावाह्या न कृषन् कृषिकृत् वराम्॥
नोषरां वाहयेद्भूमिं वर्चोश्मककरीष्टताम्।
वाहयन्नाप्रमत्तश्च न नदीपुलिनं तथा।
यद्यसौ वाहयेल्लोभात्तद्यपाह्यापि हि मानव।
क्षीयते,सो चिरात्पापात् सपुत्रपशुबान्धवः॥

ब्रह्मा वै ब्राह्मणानां स्वात्प्रमुखसृजदादितः ॥
तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि ।
पशुपाल्यार्जनोत्पत्त्यै ऊरुभ्याञ्च तथा विशः ॥
द्विजदास्यार्थं पश्चाच्च पद्भ्यां शूद्रमकल्पयत् ।
यत्किञ्चिज्जगती थत्र भूगेहाश्व गजादिकम् ॥
स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत् ।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ॥
न तयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षयेत् ।
तस्माद्ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम् ॥
ग्रामेशस्य नृपस्यापि किञ्चिन्नमप्यसौ बलिम् ।
अथान्यत्सम्प्रवक्ष्यामि कृषिकृच्छ्रविकारणम् ॥
संयुक्तः कर्षको येन स्वर्गलोकमवाप्नुयात् ।
सर्वसत्त्वोपकाराय सर्वत्र कृषिकर्मरः ॥
कुर्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यसत् ।
सर्वस्य स्थितिकारण्यात्स देवपितृभिः पुनः ॥
मनुष्याणान्तु पोष्याय कृषिं कुर्यात् कृषीवलः ।
वयांसि चान्यसत्त्वानि क्षुत्तृष्णापीडितो द्विजः ॥
विमुक्तः सर्वपापेभ्यः स्वर्लोकमवाप्नुयात् ।
चतुर्दिक्षु पले कुर्यात्प्राच्यामतिघनावृतिम् ॥
सैकद्वारापिधानञ्च पिदध्याच्चैव सर्वतः ।
परोक्षजीरणाद्धन्त विचरन्तु निवारयेत् ॥
शूकरशृगालादिकाकोलूककपोतवान् ।
त्रिसन्ध्यं प्रोक्षणं कुर्यात् दामीयामृतवाम्बुभिः ॥
रक्षां च भस्मना कुर्याज्जलधाराभिरक्षयम् ।

निमन्थ्य मर्चयेत्सीतां पराशरर्षिं स्मरन् ।
प्रेतभूतादिनामानि न वदेच्च तदग्रतः ॥
सूतिकागृहवच्चात्र कर्त्तव्यन्तत्र रक्षणम् ।
हरन्त्यरक्षितं यस्मात् रक्षांसि सर्व्वमेव हि ॥
प्रथमादिव पूर्वाह्णे नापराह्णे न सन्ध्ययोः ।
धन्योऽस्मान सदा कुर्यात्सीतापूजनपूर्वकम् ॥
यजेत पत्रभिस्ताभिः कलेरोऽप्ययमेव हि ।
भक्त्या सर्वं प्रदत्तं हि तत्समस्तमिहाक्षयम् ॥
खलयज्ञा पवित्रेयं ब्रह्मणा निर्मिता पुरा ।
भागधेयमयीं कृत्वा तां यजन्त्वीह सात्त्विकाम् ॥
शतक्रत्वादयो देवाः पितरः सोमपादयः ।
सनकादिमनुष्यांश्च येषान्ये दक्षिणायनः ॥
तदुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं खले ।
विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च ॥
पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् ।
अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः ॥
दीनानामप्यनाथानां कुष्ठीनां कुशरीरिणाम् ।
क्लीबान्धबधिरादीनां सर्वेषामपि दीयते ॥
वर्णानां पतितानाञ्च दुःखभूतानि तर्पयेत् ।
चाण्डालानाञ्च पाकानां प्रीत्यात्युक्ताविचारवत् ॥
ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः ।
सोकश्च सौरिभिः सर्वैर्वर्णिभिर्मृष्टमेधिभिः ॥
दत्त्वात्वनृतया वाचा क्षमियाय विसर्जयेत् ।
ततः कृत्वा स्वगृहं गच्छेच्छ्राद्धमभ्युदयं श्रयेत् ॥

षट् कर्माणि कृषिं ये तु कुर्युर्ज्ञानविधिं द्विजाः ।
ते सुरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः ॥
षट्कर्मभिः कृषिः प्रोक्ता द्विजानां गृहमेधिनाम् ।
गृहस्थ गृहिणीमाहुस्तद्विवाहमथोच्यते ॥
इति श्रीबृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रणीतायां कृषिकर्मसीतायज्ञोपवर्णनं नाम तृतीयोऽध्यायः॥

---

## चतुर्थोऽध्यायः ।

स्वयञ्च याजयेत् क्षेत्रै धान्यैश्च स्वयमर्जितैः ।
कुर्याद्विवाहयागादिपञ्चयज्ञांश्च नित्यशः ॥
अष्टौ विवाहा नारीणां संस्काराय प्रकीर्तिताः ।
ब्राह्मादिक्रमेणैव सम्प्रवक्ष्याम्यतः पृथक् ॥
जात्यादिगुणयुक्ताय पुंस्त्वे सति वराय च ।
कन्यामलङ्कृत्य दीयेत विवाहो ब्राह्मः स तु ॥
रैतो मज्जति यस्मात्तु सूनञ्च द्वादिकोऽनिलम् ।
पुमान् स्यात् लक्षणैरेतै र्विपरीतैश्च षण्डकः ॥
ये यज्ञे वर्त्तमाने तु ऋत्विजः कर्म कुर्वते ।
कन्यामलङ्कृत्य दीयेत विवाहः स तु दैवकः ॥
वराय गुणयुक्ताय विदुषे सद्व्रताय च ।
कन्या गोद्वयमादाय दीयतार्षः स उच्यते ॥
कन्या चैव वरश्चोभौ इच्छया धर्मचारिणौ ।
स्यातामिति च यत्रोक्तं दानं कार्यं विधिस्त्वयम् ॥
एतावद्देहि मे द्रव्य मित्युक्त्वा प्राक् प्रदाय च ।

यत्र कन्या प्रदीयेत स दैवत्यविधिः स्मृतः ॥
यत्रान्योन्याभिलाषेण उभयोर्वरकन्ययोः ।
तयोस्तदोर्विवाहः स्याद्गान्धर्वः प्रथितः स तु ॥
युद्धे हृत्वा वैर्नात्कन्या यत्रास्थिचाए इत्यथा ।
उह्यन्तु स तु विदद्भिर्विवाहो राक्षसः स्मृतः ॥
सुप्तां वापि प्रमत्तां वा कन्यां छलेन भुज्यते ।
सर्वेभ्यः स तु पापिष्ठः पैशाचः प्रथितोऽष्टमः ॥
आद्या वाद्यस्य षट् प्रोक्ता धर्मांश्चत्वार एव हि ।
चत्वारोऽन्ये द्वितीयस्य आद्यस्य च द्वयस्य च ॥
पञ्चमश्च तथाषष्ठः स्मृतौचतु चतुर्थयोः ।
द्वितीयस्यापि यत्प्रोक्तां एतयोस्तेन चाष्टमः ॥
वैश्यस्याद्यनुरूपेण द्वितीयापरयोः स्मृतः ।
सर्वसप्तममेकस्याद्वितीयस्यैव कीर्त्तितः ॥
धन्यावत्यधर्मो चोक्ता वृद्धाद्यः शवस्थानुना ।
दयायुधस्वरूपेण प्रोक्तो दैत्यस्तु मानुषः ॥
वार्त्तया प्राक्ततोऽधस्ताच्चतुराद्यविवाहजैः ।
स्वात्मानं द्विगुणान्वस्याद्दश सप्त च यथ षट् ॥
स्त्रीणामाजन्मधर्मार्थं संग्रहुद्धौ प्रयत्नवान् ।
वरं हि कवयो विद्वान् जात्यादिगुणसंयुतम् ॥
जातिर्विद्यावयः शक्तिरारोग्यं बहुपक्षता ।
अर्थित्वं वित्तसम्पत्तिरष्टावेते वरे गुणाः ॥
जातिर्विद्या च रूपञ्च कुलञ्चैव नवं वयः ।
आरोग्यं विशेषेण गुणो मत्यपि भजयेत् ॥
जातीरूपञ्च शीलञ्च वयो नवमरोगिता ।

स्वाचरत्वं विशेषेण सलक्षवरमाश्रयेत् ॥
स याति रूपं वित्तञ्च तथाशेषयसं दृढम् ।
सन्तोषजननं स्त्रीणां प्रज्ञावानाश्रयेद्वरम् ॥
न जातिं नच विद्याञ्च वित्तं वाधरणं स्त्रियाम् ।
किन्तु तत्राऽभिमिच्छन्ति तस्मात्प्रीतिकरं श्रयेत् ॥
पिता यत्र सगोत्रत्वं माता यत्र सपिण्डता ।
न च तामुद्वहेत्कन्यां दारकर्मण्यमादृताम् ॥
कन्यायाश्च वरस्यापि लक्ष्मोभयो भवेद्गतिः ।
तथा कन्यां वरो धीमान्वरयेद्वशशुद्धये ॥
नानामतानि सर्वेषां सतां कन्यां वरं प्रति ।
सन्तानार्थं विशुद्ध्यर्थं जात्यादिषु च नान्यतः ॥
दूरस्थानामविद्यानां मोक्षं धर्मानुयायिनाम् ।
शूराणां निर्धनानाञ्च न देया कन्यका बुधैः ॥
वर्जयेदतिरिक्ताङ्गीं कन्यां हीनाङ्गरोगिणीम् ।
अतिलोम्नीं हीनलोम्नीं मवाचमतिवाग्युताम् ॥
पिता पितामहो भ्राता माता मातामहोऽपि वा ।
कन्यदाः स्युः क्रमेणैते पूर्वाभावे परः परः ॥
अधिकारी यदा न स्यात्तदस्याय शुभस्य सा ।
तद्विराच स्वयङ्कर्य्यं कन्यापि वरयेद्वरम् ॥
पिङ्गलां कपिलां कृष्णां दुष्टायत्ताकनिस्तनाम् ।
स्थूलाङ्गजङ्घपादाञ्च सदा चामिदवादिनीम् ॥
त्वलेश्यगकटीनाम्नीं पचिहदर्शनानियाम् ॥
चक्षिमत्यल्पनाम्नीश तथाभीषणनामिदाम् ।
सुजातिमुद्वहेत्कन्यां सुरूपां लक्षणान्विताम् ॥

अरोगिणीं सुशीलाञ्च तथा भ्रातृमतीमपि।
सुलज्जां शुभनासाञ्च पतिप्रीतिकरीमपि॥
श्वश्रूश्वशुरगुर्वादिशुश्रूषाकारिणीं प्रियाम्।
अव्यङ्गकुलसञ्जाता मनभिज्ञस्ववगर्जाम्॥
प्रस्वेदसुभगां धाता शुभमिच्छन् समुद्वहेत्।
द्विजः स्वामपरेद्वेतु राजा स्वामपरे तथा॥
वैश्यः स्वाञ्च चतुर्थीञ्च क्रमेणैव समुद्वहेत्।
पितृभिः सप्तमीमेके मातृतः पञ्चमीमपि॥
उद्वहेदितिमन्यन्ते कुलधर्मसमाश्रिताः।
उक्तलक्षणकन्याया कृत्वा पाणिग्रहं द्विजः॥
धर्मोद्वाहेनकेनापि तदा दद्याद्धुताशनम्।
दायाद्यकाले वा दद्यात्तदुक्तं कर्मकृद्द्विजः॥
यदा वापि भवेच्छक्तिः सम्पत्तिर्वा तदा भवेत्।
ऋतावृतौ स्त्रियङ्गच्छेत् स्त्रीच्छया चवर स्मरन्॥
सर्वत्रदिच्छया कुर्यादुभयाभयोभवेद्रतिः।
भोज्याळङ्कारवासोभिः पूज्याः स्युः सर्वदा स्त्रियः॥
यथा किञ्चिन्न शोचन्ति नित्यं कार्य्यंतथा तुभिः।
आयुर्वित्तं यशः पुत्राः स्त्रीप्रीत्या स्युर्नृणां सदा॥
नश्यन्ते ते तदा प्रीतौ तासां शापात्संशयः।
स्त्रियश्च यत्र पूज्यन्ते सर्वदा भूषणादिभिः॥
देवाः पितृमनुष्याश्च मोदन्ते तत्र वेश्मनि।
स्त्रियस्तुष्टाः स्त्रियः साक्षाद्रुष्टाश्च दुष्टदेवता॥
वर्धयन्ति कुलन्तुष्टाः नाशयन्त्यपमानिताः।
नापमान्याः स्त्रियः सद्भिः पतिश्वशुरदेवरैः॥

भ्राता पिता च माता च तथा बन्धुभिरेव च ।
स्त्री यस्य पुरुषस्यापि यतोभयो भवेद्गतिः ॥
तत्र धर्मार्थकामाः स्युः स्वाधीना यतस्त्वमी ।
षट् कर्माणि नृणान्तेषां येषां भार्या पतिव्रता ।
पतिलोकन्तु ता यान्ति तपसा तेन योगवित् ॥
पतिव्रता तु साध्वी स्त्री अपि दुष्कृतकारिणी ।
पतिमुद्धृत्य याति द्यां काकीव पतिता रुजाम् ॥
जीवन्त्यापि मृतोवापि पतिरेव प्रभुः स्त्रियाम् ।
नान्यत्र देवता तासां तमेव प्रभुमर्चयेत् ॥
अन्यस्य पि हि दुष्टा स्त्री यान्यभावा प्रियम्पतिम् ।
सा गच्छेन्नरकं घोरन्तद्रोषांह्युतेऽपि च ॥
नियोज्य गृहकार्येषु सर्वदा ता नृभिः स्त्रियः ।
गृहार्यासक्तचित्तास्तास्तदेवार्हन्ति शोचितुम् ॥
स्त्रीणामष्टगुणः कामो व्यवसायश्च षड्गुणः ।
लज्जा चतुर्गुणा तासां माहारश्च तदर्द्धकः ॥
न वित्तं नैव जातिञ्च नापि रूपमपेक्षते ।
किन्तु ताभिः पुमानेव इति रत्वैव भुज्यते ॥
विकुर्वाणाः स्त्रियो भर्तुरायुष्यधननाशकाः ।
अनायासेन वा स्वस्य यथाशक्त्या भवन्ति हि ॥
नारीणाञ्च नदीनाञ्च न गतिर्ज्ञायते नृभिः ।
कूलं कूलं प्रयायिन्योः कालक्षेपो न जायते ॥
चेष्टाचरित्रचिह्नानि देवानैव विदुः स्त्रियाम् ।
किं पुनः प्राणिमात्रा स्युः सर्वथा नष्टबुद्धयः ॥

तस्मात्ताः सर्वथा रक्ष्याः सर्वोपायैर्नृभिः सदा।
श्वशुरैर्देवराद्यैस्ताः पितृभ्रात्रादिभिस्तथा॥
विवाहात् प्राक् पिता रक्षेत्ततः पतिस्तु यौवने।
रक्षेयुर्वार्द्धके पुत्राः नास्ति स्त्रीणां स्वतन्त्रता॥
स्वातन्त्र्येण विनश्यन्ति कुलजा अपि योषितः।
न स्वातन्त्र्यं मतस्तासां प्रजापतिरकल्पयत्॥
अशौचाच्च सशौचाच्च अमेध्या अपि पावनाः।
दुर्वाचोऽपि सुवाचस्ता स्तस्मादन्वेषयेत्ततः॥
शौचं वाचं च मेध्यत्वं सोमगन्धर्वपावकाः।
ददुस्तासां वरानेतां स्तस्मान्मेध्यतराः स्त्रियः॥
भर्त्तारो वो भविष्यन्ति युष्मच्चित्तानुसारिणः॥
रक्षणीयास्तव तास्तु सर्वभावेन योषितः॥
ममाज्ञलंघ्य मित्राद्यैर्दैवन्यस्ता वृथा तनौ।
अर्धकाया वृथा तासां पृथक् धर्मादिना स्त्रियम्॥
नदी वापी स्त्रियं गच्छेन्न सगर्भां व्यवस्थिताम्।
अभिगच्छेद्विद्वान् यस्तदा भूः क्षयमेति च॥
नदी वापी स्त्रियं गच्छेदिच्छं स्त्वदिच्छयापि च॥
न पर्वसु न सन्ध्यासु नाद्यासु चतुरात्रिषु।
वन्ध्याष्टमेऽधिवेत्तव्या नवमे च मृतप्रजा॥
एकादशी स्त्रीजननी सद्यस्त्वप्रियवादिनी।
न वक्त्रेऽभिगमं कुर्यात्पाणी गृहीतयोषितः।
कुर्याच्चेदितरं तस्य पतन्ति रेतसोभुजः॥
भार्याधीनं सुखं पुंसां भार्याधीनं गृहं वनम्।

भार्याधीना सुखोत्पत्ति भार्याधीन शुभोदयः ॥
यत्र भार्या गृहं तत्र भार्याहीनं गृहं वनम् ।
न गृहेण गृहस्थः स्यात् भार्यया कथ्यते गृही ॥
गृहीस्याद् गृहधर्मेण स वै पञ्चसूनादिकाः ।
तद्धीनो न गृहस्थः स्यात् भार्यया कथ्यते गृही ॥
श्रौतो वा यदि वा स्मार्त्तः सर्वेषां गृहमेधिनाम् ।
कण्डन्युदककुम्भीच चुल्ली पेषण्युपस्करम् ॥
पञ्चयज्ञविधानेन कुर्यात्पञ्च महामखान् ॥
पञ्चसूना यजन्त्येव सूनादोषो न विद्यते ॥
यदादौ वेदमारभ्य स्नात्वा भक्त्या द्विजोत्तमः ।
अध्यापयेद्द्विजान् शिष्यान् स वै ब्रह्ममखः स्मृतः ॥
यः स्नात्वाऽहरहः कुर्या देवांश्च मनुजान् पितॄन् ।
तर्पयेदम्भसा भक्त्या पितृयज्ञः स वै मखः ॥
श्रौतेवा यदि वा स्मार्त्ते यज्जुहोति हुताशने ।
विधिवद्वह्निः सर्वै विप्रः स तु देवमखः स्मृतः ॥
स्वस्वाध्यायास्तु यः कुर्याद् तपोयो यजि द्विजः ॥
इन्द्रादिभ्यस्तथान्येभ्यः स वै भूतमखो मतः ।
समागतातिथिं भक्त्या यद्भोजयति नित्यशः ॥
अन्यानभ्यागतांश्चैव समानीयेष्टि कथ्यते ।
एवं पञ्चमखं स्यान्महामासाद्यथाक्रमम् ॥
स सन्तर्प्य पितॄन् देवान् मनुजं स्वर्गमामुदात् ।
गृहस्थायौषधिं मत्वा त्वाच धेनु चतु सनीम् ॥
स्वर्गौकसः पितॄन् देवान् पुण्यातिथिवरानपि ।

स्वर्गौकोभिः पितृभ्यस्तु पुज्यास्तेऽतिथयो द्विजैः॥
चत्वारस्तु सुता एते यज्ञस्येह उदाहृतः।
स्वाहाकारो वषट्कारो हन्तकार स्तथा स्वधा॥
दैवानि भागधेयो द्वौ अन्यश्च मनुजा स्तथा।
पितृणाञ्च चतुर्थस्तु इतिवेदनिदर्शनम्॥
इति निवृत्य विधिवत्सम्यक्त्वं कर्म नैत्यिकम्॥
प्राणाग्निहोत्रविधिना भुञ्जीतान्नं मधापहम्।
अदत्त्वा भोज्यवर्गस्य ह्यहत्वाऽध्यापनादिकम्॥
असात्विकश्च योऽश्नीयात्सोऽश्नीयात्किल्बिषं द्विजः।
माक्षुश्वादिकमेणाशु दिव्यायुः कीर्तिकीर्त्तितम्॥
दिव्याग्निस्थानलचाद्याद्यदूयमेदश्नन्ति राक्षसाः॥
अथ प्राणाग्निहोत्रस्य श्रूयतां द्विजसत्तमाः।॥
वक्ष्यमाणो विधिः पुण्यः यावन्तः प्रेत्य चेह च।
यो विधिं दैवतान्यस्त समोरवस्त्वनाश्नुत॥
तद्विदस्तु दिवं यान्ति मुक्ता देवान् च योगेन च।
अहरेद्यदि मत्वाशु पुरुषानेकविंशति॥
सर्वेष्टिफलभाक् यायाद्धेम चय मक्षयम्।
यः कालाकालविद्विप्रो नैन,स्वर्गी स कर्हिचित्।
सोऽसृष्टो नाविशेत्तत्र यष्टव्वा नैव सहतौ।
दयपस्याङ्गुल्यात्रं नासिकाया वहि स्थितम्॥
जीवो यत्र विशुद्धेत सा कला षोडशी स्मृता।
सर्वमेतत्तया व्याप्तं त्रैलोक्यं सचराचरम्॥
ब्रह्मविद्येति विख्याता वेदान्ते च प्रतिष्ठिता।

न वेद वेदमित्याहुर्वेदवाम परम्पदम् ॥
तत्परं विदितं येन स विप्रो वेदपारगः ।
आकृतिः सा परा ज्ञेया सा च शान्तिः प्रकीर्तिता ।
गायत्री सा च विज्ञेया सा च सन्ध्या प्रकीर्तिता ॥
तत्काष्ठ तत्र वै ज्ञेयं तद्वत तदुपासितम् ।
ता कला यो विजानाति स कलज्ञो द्विजः स्मृतः ॥
यत्तुरीयं पदं प्रोक्तं यस्मिन् लीनमिदं जगत् ।
तत् ज्ञात्वा परमं तत्त्वं न भूयः पुरुषो भवेत् ॥
प्राणमार्गास्त्रयः प्रोक्तास्तिस्रो नाड्यः प्रकीर्तिताः ।
ईडा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥
ईडा च वैष्णवी नाडी ब्रह्माणी पिङ्गला स्मृता ।
सुषुम्ना चेश्वरी नाडी त्रिधा प्राणवधा स्मृता ॥
उत्तरं दक्षिणं ज्ञेयं दक्षिणोत्तरसंस्थितम् ।
मध्ये तु विषुवं ज्ञेयं पुटद्वयविनिःसृतम् ॥
संक्रान्तौ विषुवञ्चैव यो विजानाति विप्रजम् ।
नित्यमुक्तः स योगी च ब्रह्मवादिभिरुच्यते ॥
मध्याह्ने चार्धरात्रे च प्रभातेऽस्तनये तथा ।
विषुवन्तं विजानीयात्पुटद्वयविनिःसृतम् ॥
हृत्पुण्डरीकमरणी मनोमथ्यनमेव च ।
प्राणरज्वा न्यसेदग्निं रात्माध्वर्युः प्रतिष्ठितः ॥
ज्वालयेत्पूरकेणाग्निं स्थापयेत्कुम्भकेन तु ।
रेचकेणोर्ध्ववक्त्रेण ततो होमं करोति यः ॥
यत्तद्धृदि स्थितं पद्ममधोनालं व्यवस्थितम् ।

तद्वै विकासते पद्मं प्रणवन्तत्र सपेति ॥
वामहस्ताहृते पात्रे दक्षिणे चाम्भसि स्थिरे ।
सनाड् सुस्वरेद्विप्र आच्छन्नाग्रन्तु पूरयेत् ।
पूरयेत् पूरकं प्राङ्क निश्चलं कुम्भकं भवेत् ।
विनिःसृत्य शनैर्वायू रेचकान्तं विनिर्दिशेत् ॥
स्वांशान्तैः प्राणवाद्यैश्च स्वस्वनाम्ना च वायुभिः ।
जितात्मा योपितं पञ्च. पञ्चाहुत्याहुतिं भवेत् ॥
जिह्वादत्तं ग्रसेदन्नं दन्तैश्चैव न तत् स्पृशेत् ।
दशनैः स्पृष्टमाने तु पुनराचम्य चारभेत् ॥
मुख.माहवनीयोऽग्निर्गार्हपत्य स्तथो.दरे ।
हृदये दक्षिणाग्निश्च सभ्याग्निश्चापि दक्षिणे ॥
सभ्यश्चोत्तरतश्चान्य इत्यग्निस्मरणक्रम ।
प्राणाप्येव हि होतादि चिन्तयेत्तदेव तु ॥
होतारं प्राणमित्याहुरुद्गातारमपानकम् ।
ब्राह्मणं व्यानमित्येके उदानाध्वर्युमित्यपि ॥
समानञ्चैव यज्वानमिति ऋत्विक्क्रमं बुधः ।
अहङ्कारं पशुं कृत्वा प्राणञ्च पशुमित्यपि ॥
बर्हिः प्रत्यरणिः पृथ्वी लोमानि च कुशाः स्मृताः ।
मनोविभक्ता स्रग्जिह्वा इति तास्ते प्रचक्षते ॥
कृत्वा तु मान्त्रमोङ्कारं ऊङ्कारश्च तथा पुनः ।
उत्तिष्ठञ्जनताये च हरिज्ञापितपिङ्गलः ॥
सुप्त. परिधये तुभ्य मुहङ्कि दैवतस्य यत् ।
विजिह्वो यो जाठराग्नेः स्वाहा प्राणाय वाल्ययः ॥

इन्द्रगोपककर्णाय जिजिह्वायाग्निदैवतम् ।
ॐ स्वाहा प्राणाय स्वाहाकारान्तं मुच्चरेत् ॥
गोक्षीरसमवर्णाय पर्जन्यवह्निदैवतम् ।
स्वाहोदानाय सोङ्कार मन्त्राय परिचिर्षे ॥
तडित्समानवर्णाय वाय्वग्निर्दैवतायने ॥
ॐ स्वाहाय समानाय ॐ स्वाहा चाथ वेधसे ।
तर्जनीमध्यमाङ्गुष्ठैः प्राणस्य चाहुतिः ॥
मध्यमानामिकाङ्गुष्ठैर्व्यानस्य परिकीर्तिता ।
कनिष्ठानामिकाङ्गुष्ठैरपानायाहुतिः स्मृता ॥
मध्यमानामिकाख्या मुदाने जुहुयाद्बुधः ।
समाने सर्वहस्तस्य आहुतिः स्यात्समानता ॥
जलं पीत्वा तु तृप्यन्ति देवयज्ञ शनैः शनैः ।
ततोऽन्यद्व्यमश्नीयात् पूरणायोदरस्य च ॥
विधिं प्राणाग्निहोत्रस्य ये द्विजा नैव जानते ।
भयानेन तु भुञ्जन्ते तेषां तुपमयानवत् ॥
यो ज्ञात्वा तु विधिं भुङ्क्ते यथोक्तमिदमाचरेत् ।
इहामुत्र च भूयस्त्वं ब्रह्मभूयाय कल्पते ॥
त्रिःसप्तकुलमुद्धृत्य दातुरप्यक्षयं भवेत् ।
दातुरपि हि यत्पुण्यं भोक्तुश्चैव हि तत् फलम् ॥
दाता चैव तु भोक्ता च तावुभौ स्वर्गगामिनौ ।
यो जानाति विधिं चेमं स भवेद्ब्रह्मवित्तमः ॥
एकं पिबति गण्डूषं यश्चोदकं धरातले ।
पीतेन पितरस्तस्य भूमौ च भूमिदेवता ॥

पिबेद्वहि .ीय गण्डूष ब्राह्मणो ध्यानदुर्बलः।
स हतः पितृदैवत्य मात्मानं नरकं व्रजेत् ॥
रहस्य सर्वशास्त्रेषु सर्वशास्त्रेषु दुर्बलम्।
ध्यानाना मुत्तमं ध्यानं न कस्यचित्प्रकाशयेत् ॥
ध्यानानि च प्रकाशानि यु सामविदुषां वदेत्।
न प्राप्यस्य फलं तेषा मात्मानं नरके नयेत् ॥
अश्नीयाद्विधिवच्च्य सपात: छतपरीहृतः।
पूजितान्नमवाग्जुष्टः स पैशाच समाप्तिकम्।
याग्यतन्यसपाणोऽपि त्रियासान पि वा द्विजः ॥
तस्य त्रिरात्रमुख्यस्तु दानेऽपि कवयोविदुः।
चतुस्त्रिकोणाऽन्ता च विप्रचत्रविशा क्रमात् ॥
वदन्ति परिक्षयन्ति तथैनान्नतु राक्षसम्।
गण्डूषीयात्प्राणपोशान तथा भुक्ता सकृत्पय ॥
अनन्न मध्वत तत् स्यात् भुक्तमेवं द्विजन्मना।
काले भुक्ता समुत्थाय प्रोच्य विप्र समीक्ष्य च ॥
च्छ पतिन्ताच स्थित्वा चिन्तयेद्यज्ञसत्यकम्।
भार्य्या भोजनवेलायां भिक्षां सम्राय पञ्च वा ॥
दत्त्वा शेषं समश्नीयात्सापत्यभृत्यकैः सह।
निहत्य माऽपि सकलं किञ्चित् स्थित्वा सुखेन च ॥
स्वस्वीयपल्लकार्य्येषु सापि सा त्वपरा पुनः।
उपास्य पश्चिमां सन्ध्यां छत्वा चैवाग्रगुणनिगम् ॥
किञ्चिन्पश्चात्तामश्नीयात्प्राय प्रातरिति श्रुतिः।
स्वाध्याय मभ्यसेत्किञ्चित् यामद्वयगतीति च ॥

शयानो मध्यमौ यामौ ब्रह्मभूयाय कल्पते ।
सुशयने शयीनायो एकान्ते च स्त्रिया सह ॥
सेवनं मैथुनादीना वदन्ति मुनिपुङ्गवा ।
ऋतुत्रयात् सुपुत्रार्थी आधानविधिना द्विज ॥
प्रसह्य भस्माना योनि क्षितिरन्थ्रेति दर्शनात ।
कृत्वाधानविधानन्तु स्त्रीयोग मभ्यसेत् पुन ॥
मभ्येदविहतौ योनौ विकाराद्दिक्षिता प्रजा ।
ब्रह्ममुहूर्त्तमुत्थाय प्रात सन्ध्या सुपक्रमेत ।
आसूर्य्योदयनात्प्रात मायश्च वर्षदर्शनात् ॥
अनृत मद्यगन्धश्च दिवामैथुनमेव च ।
पुनाति वृषलस्यान्न सन्ध्यां वहिरुपासिता ॥
सिन्दुरारुणाभ भाति यौवन यौवतारति ।
उदयेऽस्तमये भानो तावमन्थेति शक्तिज ॥
आधानतो द्वितीयेतु मासे पुंसवनं भवेत् ।
सीमन्तोन्नयन षष्ठे कार्य्यं मासेऽष्टमेऽपि वा ॥
जातस्य जातकर्मादि विधिवच्छाद्धपूर्वकम् ।
दिने चैकादशनामकर्मादिवद्द्विजन्मनाम् ॥
तुर्यनिष्क्रमणं मासे षष्ठेऽन्नप्राशन तथा ।
चूडाकर्म द्वितीयेऽब्दे कार्य वा कुलधर्मत ॥
सर्व स्त्रिया विमन्त्र तु कार्य कार्यविमुक्तये ।
न स्मर्यस्य द्विजा श्वेता न्नियायै च कथञ्चन ॥
म व्रात्य स परित्याज्यो द्विजो यस्माद्द्विजन्मनाम् ।
मुञ्जमौर्वीरशनानान्तु विहता रशना मता ॥

कार्पासशणमेषोर्णान्युपवीतानि निर्दिशेत्।
पालाशवटपीलूनां दण्डाश्च क्रमशः स्मृताः॥
कार्ष्णं च रौरवं वास्तं मौञ्जनानि द्विजन्मनाम्।
शिरोललाटनासान्त क्रमाद्दण्डाः प्रकीर्तिताः॥
अव्रणाः सत्वचो दृश्या उक्ताः शुभकराः श्रियाम्।
गायत्र्या त्रिष्टुप् जगत्या तथा चासुपनायनम्॥
गायत्र्यामिव शेषो वा शुक्लादित्यपरेषु च।
सवितुः पादः सवितुर्विश्वारूपाणि चक्रमात्॥
औपासनायिका मन्त्रा विप्रादीनां तु दीक्षिताः।
ब्रह्मणो विप्रगेहेषु नृपसोमूत्तमेषु च॥
वैश्यो विप्रो नृपः सैव कुर्याद्भिक्षा स्ववृत्तये।
एकान्नश्च द्विजोऽश्नीयाद्ब्रह्मचारी व्रतैः स्थितः॥
भिक्षाव्रतं द्विजातीनां उपवाससमं स्मृतम्।
प्रतिपन्नो न भिक्षा स्यान्न तस्याः परपाकता॥
सोमपानसमा भिक्षा अतोऽश्नीत स भिक्षया।
भिक्षया यस्तु भुञ्जीत निराहारः स उच्यते॥
भिक्षामभ्याभियस्तेषु सागारेषु द्विजेषु च।
भिक्षेत भिक्षां क्रमशो गुरोः कुलं विवर्जयेत्॥
स्वसारं मातरश्चापि मातृस्वसारमेव च।
भिक्षेत प्रथमां भिक्षां याचेत न विमानयेत्॥
भवति। भिक्षां मे देहि भिक्षां भवति। देहि मे।
भिक्षां मे देहि भवति। क्रमेणैवमुदाहरेत्॥
द्वादशाब्दं व्रतं धार्यं षट् त्र्यब्दं तु श्रुतिं प्रति।
आदित्याब्दे स्नजेत्तद्धे दत्त्वा तु गुरवे वरम्॥

त्रयस्तु स्नातकाः प्रोक्ताः विद्याव्रतोपसेविनः ।
विद्यां समाप्य स स्नायाद्विद्यास्नातक उच्यते ॥
समाप्य च व्रतं यस्तु व्रतस्नातक उच्यते ।
द्वयं समाप्य यः स्नायात्स विनामाभिधीयते ॥
षष्ठैकद्वादशाब्दानि सगर्भाणि द्विजन्मनाम् ॥
मुख्यकालो व्रतस्यैव ह्यन्य उक्तो विपर्यये ॥
द्विगुणाब्देषु कर्त्तव्या क्रमादुपनतिर्द्विजे ।
हीनगायत्रीच व्रात्या उक्तकालादनन्तरम् ॥
नाध्येयो नैव चोद्वाह्योऽव्यवहारविवर्जितः ।
न योज्योनार्थकार्य्येषु प्रयोज्यास्तु इति श्रुतिः ॥
स्त्रीवन्निर्लोमवक्त्रा ये निर्लोमदेहवक्षसः ।
उदरस्थानपत्याश्च अद्दृश्यास्ते विगर्हिताः ॥
येऽजस्त्रं विहितं कुर्युः प्राप्नुयुस्ते सदा शुभम् ।
दीर्घायुष्ट्वं प्रजावित्त्वमरोगित्वं यथोदितम् ॥
क्षीणायुष्यं दरिद्रत्वमप्रजत्वमरोगिताम् ।
गर्हितत्वं च लोकेऽत्र विदुर्निषिद्धकारिणः ॥
प्रातर्वा यदि वा सायं मध्याह्ने मनर्चितम् ॥
नानाज्यस्यामपोशानं शुभप्रेप्सु द्विजन्मनाम् ।
आपोशानं विना नाद्यान्नाद्यान्न मनर्चितम् ।
अनाज्यं न दिवा सायं शुभमिच्छन् समश्नुते ॥
षोडशाब्दानि विप्रस्य द्वाविंशति नृपस्य च ।
चतुर्विंशतिरन्यस्य व्रात्यास्ते स्मरतः परम् ॥
उपनेया न ते विप्रैर्नाध्याप्याः शूद्रधर्मिणः ।
न व्यवहार्यास्त्याज्याश्च इति धर्मविदो विदुः ॥

स्त्रीणामुद्वाह एको वै वेदोक्तपावनो विधिः ।
स्त्रीपुंसोर्यत्र विन्यासः सुन्वोरन्योन्यमुच्यते ॥
स्वस्मिंस्तस्माद्बिभर्त्येषा पतिर्बिभर्ति सोऽपि ताः ।
अतो भार्या च भर्ता चेत्यत्र वेदो निदर्शनम् ॥
पतिर्विशति यज्जाया गर्भो भूत्वेह मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥
जातोऽस्मात्तेन जाया वै यदस्यां जायते पुनः ।
भूयमाभवनं भार्या बीजमस्यां निषिच्यते ॥
देवा ऊचुर्मनुष्याय भार्या तु जननी तु यः ।
आत्मना जायते ह्यात्मा सेरावत्यतितारिणीम् ॥
भार्या जाया जनन्येषा इति वेदप्रतिष्ठितः ।
यस्मात्त्रायति पुन्नाम्नो नरकात् पुत्र उच्यते ॥
सर्वां सद्दृष्टिमाहत्य तद्व्रतं ह्यार्णैकताम् ।
यं पिता जातपुत्रस्य पश्येच्चेज्जीवतो मुखम् ॥
सर्वं मे सफलं मास मैष्टिकामुत्रकस्य यत् ।
किं दण्डैरजिनैस्तीर्थैस्तपोभिः किं समाधिभिः ॥
पुमांसः पुत्रमिच्छध्वं स वै लोके वदावदः ।
यान्नमुष्मिन् शरणं हि वासो रूपं हिरण्यं पशवो विवाहः ।
सा च यन्मा सपथाश्च पुत्रो ज्योतिः परम्पुष्ट कृष्णायमुत्र ॥
स पुण्यकृत्तमो लोके यस्य पुत्रश्चिरायुषः ।
विशेषेण हि धर्मज्ञः स परं ब्रह्म विन्दति ॥
पुत्रेण प्राप्यते स्वर्गो आत्मजात्मेण तु ध्रुवम् ।
तस्मादिच्छन्ति सर्वेऽपि पशवोऽपि वयांसि च ॥
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ।

पुत्रस्यापि न पुत्रत्वं य स्त्राति नरकार्णवान्।
य. पिता स तु पुत्रस्तु जायेवहि जनन्यपि ॥
न पृथक्त्व विदुस्तज्ज्ञा यनयो: पर्ययोऽपि ।
अथ हि यस्या पुरुषस्य तस्य पुत्रं भवेत्पुत्रजन्मेह यस्य ।
तद्दीक्ष चोर्ध्वं पथयो वयांसि पुत्रार्थिनो मातरमारुहन्ति ॥
वनिष्यमाणा इच्छन्ति पितर स्वकुले सुतान् ॥
कश्चिद्गत्वा गयायां नोऽवश्यपिण्डान् प्रदास्यते ।
यक्ष्यत्यन्योऽश्वमेधेन नील मोक्ष्यति गोग्टहे ॥
इष्टव्य पितृभि सर्वपुत्रेभ्य सकलं फलम् ।
युद्धशौर्यकचित्तो वा प्राणान्मोक्ष्यति गोग्टहे ॥
दानदो वा कुरुक्षेत्रे ज्ञानी वाथ भविष्यति ।
पुच्छे शिरसि य. पुत्रा पुत्रपा योषित वपु ॥
देवाग्रभोष्टी नीले य: कुलज्य: पावनो हय ।
रतो वा यदि वा पुत्रो भुवि याग शुभेक्षण: ॥
यो न हीनातिरिक्ताङ्ग स्व वा हय ससुत्सृजेत् ।
दुहितापि तथा साध्वी श्वशुरयो कपालिकात् ॥
पतिव्रता च धर्मज्ञा अपि दुर्गतिमुद्धरेत ।
य पिता स च वै पुत्र तत्समा दुहितापि च ॥
पुत्रश्च दुहिता चोभौ पितु सन्तानकारकौ ।
तत्सुत: पावयेहयान् ऊर्ध्वे मातामहादिकान् ॥
दौहित्र पुत्रवत् स्वर्गे उक्तौ शास्त्रैश्च तौ समौ ।
आधानादिकसंस्कारा. प्रोक्ताश्चैव द्विजन्मन. ॥
कर्त्तव्याश्च स्वशाखोक्ता केचित् कुलकर्मणा च ।

चत्वारिंशच्च ते सर्वे निषेकाद्याः प्रकीर्तिताः ॥
मन्त्रदीक्षा च विविधा तथैवान्त्येष्टिकर्म च ।
कुलाचारोऽपि कर्तव्य इति शास्त्रविदो विदुः ॥
देशाचार स्वधर्म इति प्राह पराशरः ।
अयं हि परमो धर्मः सर्वेषामिति निश्चयः ॥
हीनाचारश्च पुरुषो निन्द्यो भवति सर्वशः ।
दुःखभागीच सततं व्याधितोऽल्पायुरेव च ॥
आचारे व्यवहारे च दुराचारो विपर्ययः ।
तथाचारात्ततो धर्मः स्यादधर्मो विपर्ययात् ॥
आचारवन्तो मनुजा लभन्ते आयुश्च वित्तं च सुतांश्च सौख्यम् ।
धर्मं तथा शाश्वतमीशलोकं मत्रापि विद्वज्जनपूजिताश्च ।
वेदाः सषाङ्गैः सपुराणविद्याशास्त्राणि वेदाभिनव तद्विहीनम् ॥
कुर्युर्नचैतानि च संस्मृतानि नरं पवित्रं प्रवदन्ति वेदाः ।
येऽधीतवेदाः क्रियया विहीना जीवन्ति वेदैर्मनुजाधमास्तान् ॥
वेदास्त्यजेयुर्निधनस्य काले नीडं शकुन्ता इव जातपक्षाः ।
आचारहीननरदेहगताश्च वेदाः
प्रोचन्ति किन्तु सततं इतिस्म चित्ते ॥
यं नो भवेद्वपुषि चास्य शुभप्रयोगो
स्थानत्सदत्र अतयन्त्वननाशकर्त्ता ।
कर्मधर्म सतत शौर्यं शौचमूलं द्विजातयः ।
शौचाचारविहीनानां सर्वाः स्युर्निष्फलाः क्रियाः ।
तत्सद्धि द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
विण्मूत्रशोधनं बाह्यं चित्तशुद्धिस्तथान्तरम् ।

गन्धलेपापहं च यत् शौचमाङ्गमनीषिणः ॥
सर्द्भिरद्भिर्निलयस्य तत्कर्त्तव्यं द्विजातिभिः ।
भावशुद्धिपरं शौच मार्ङ्गरभ्यन्तरं बुधाः ॥
यस्य पुंसस्तु यच्छौच शौचैस्तम्यं किमन्यकैः ।
वाङ्मनोजलशौचानि यत्र सदा द्विजन्मनाम् ॥
त्रिभिः शौचैरुपेतो यः स सर्गो नात्र संशयः ।
स्त्रिय रिरंसुर्द्रविण जिघीर्षुर्वधाङ्किर्षुमनुजः परस्य ।
विवस्तरत्यन्तमपाप्यवाप कथं स शुद्धि समुपैति शौचात् ॥
किं निकामस्य नारीभिः किं गतास्तेव सम् द्विजैः ।
यतेन्द्रियस्य किं शौचे निष्फलं । मुर्खदानवत् ॥
न गतिर्मूर्खदानेन न तारीऽस्त्विति चाप्सनः ।
तस्मात्तस्य न दातव्यं सह दाता स मज्जति ॥
यथा भस्म तथा मूर्खो विद्वान् प्रज्वलिताग्निवत् ।
होतव्यञ्च समिद्धाग्नौ जुहुयात्को तु भस्मनि ॥
यथा शूद्रस्तथा मूर्खो शूद्रश्च भस्मवत् तथा ।
शूद्रेण सह सर्वेषु मूर्खे दानं विवर्जयेत् ॥
ग्रहीता च तार्विद्वान् तद्दाता रोड़को यथा ।
आत्मानं तारयेत्तस्य नदीं वैतरणीं द्विज ॥
यो मूर्खो विशदाचारः षट्कर्माभिरत सदा ।
स नयन् स्वर्गं मात्मानं हढात्सैव न पीड़येत् ॥
न विद्यते तयोर्यस्य यददञ्च प्रतिग्रहम् ।
अददानः स दानारमात्मानं मधधो नयन् ॥
हेम भूमिं तिलान् गाश्च अविद्वान् वि ददाति यः

भस्मीभवति सोऽज्ञाय दातु स्यान्निष्फलं भवेत् ॥
तस्माद्वृत्ति नो दद्याद्वल्पयोऽपि प्रतिग्रहम् ।
विप्रतत्त्वापरिज्ञानी विप्रेणाल्पेन नश्यति ॥
सर्वं गवादिकं दानं पात्रे दातव्यमर्चितम् ।
विद्वद्भिर्लप्स्यते तु गतिमिच्छद्भिरात्मनः ॥
हस्तिकृष्णाजिनाद्यास्तु गर्हिता ये प्रतिग्रहाः ।
गृहीत्वा गृह्णन्ति ये द्विजा स्तु पतन्ति ते ॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ।
नवश्राद्धस्य भोक्ता च न भूय पुरुषो भवेत् ॥
यो गृह्णाति कुरुक्षेत्रे मार्गेण द्विमुखीं गजम् ।
नवश्राद्धान्नभुक्तश्च वर्ज्यो निर्माल्यवद्द्विजाः ॥
एते यान्यन्यतामिस्रं यावच्चन्द्रतारकम् ।
विशोध्य वक्त्रेषु स्वैव जाता
श्रुत्यैव वेशाच मुनिश्च गीय ।
कालेच पात्रे विधिना प्रदत्त
प्राप्नोति लोको नियमे तदुक्तम् ॥
वेदविद्वान् सदाचारः सदा वसति सन्निधौ ।
भोजने चैव दाने च वर्जनीयो न सत्तमैः ॥
अत्यासन्नमधीयानान् ब्राह्मणान् यो व्यतिक्रमेत् ।
भोजने चैव दानेच हिनस्त्यासप्तमं कुलम् ॥
अन्यचाऽपि निराचारा प्रतिवासिनिवासिन ।
अन्यत्र हव्यकव्याभ्या भोज्यास्ते वत्सवादिषु ॥
सत्पात्रप्रतिग्रहाभावे प्राप्तायां बृहदापदि ।

विप्रोऽस्मन् प्रतिगृह्णन्वा यतस्ततोऽपि नाघभाक् ॥
गुर्वादियोग्यवर्गार्थं दैवाद्यर्थञ्च सर्वतः ।
गृह्यादद्यात् द्विजाग्र्यन्तु भृत्यर्थमात्मनोऽपि च ॥
दधिक्षीराज्यमांसानि गन्धपुष्पाक्षुप्रतिग्रहकान् ।
शय्यासनाशन शाक प्रत्यस्य च नहि कश्चित् ॥
अपि दुष्कृतकर्मभ्यः समादद्यादयाचिता ।
पतितादिभ्यस्तदन्येभ्य प्रतिग्राह्यमसंशयम् ॥
यत्र प्रतिगृहीतुं यो वेदज्ञस्तु सहर्तम् ।
लभ्यमानं न गृह्णाति स्वर्गस्तस्य सुनिश्चितः ॥
प्रतिग्रहस्तथा वापि याचितं यो न यच्छति ।
तत्कोटिगुणपापस्तोऽसौ हतौ दासत्वमृच्छति ॥
दाता च य स्मरेद्दानं प्रतिग्राही न याच्यते ।
उभौ तौ नरकं यातो दाता चैव प्रतिग्रही ॥
अपालस्य हि यद्दत्तं दानं स्वल्पमपि द्विज ।
गृहीता तत्तथाप्नाति भक्षालचौर्यवारित ॥
वदन्ति काश्च केचिद्दानप्रतिग्रहौ प्रति ।
प्रत्यक्षविक्रमेवेह दातृयाचकयो रतः ।
दाताहस्तो भवेदूर्द्ध मधस्तिष्ठेत्प्रतिग्रही ।
दातृयाचकयोर्भेदो हस्ताभ्यामेव सूचित ॥
सूतादीनाञ्चतुर्वर्णा तथा निन्दितभूयते ।
न विद्वान् प्रतिगृह्णीयात्प्रतिगृह्णन् व्रजत्यध ॥
पुष्टो दयगुण पूर्वात् सुनिश्चयमराधिगत ।
वैश्यो निषिद्धरूपतिप्रतिग्राही परे क्रमात् ॥

परपाकं वृथापाकं देवानामविदूषितम् ।
अनुपाकरुतं चैवं तथा मांसञ्च नादिकम् ॥
न भोक्तव्यमभोज्यान्न कन्दमूलादिकञ्च यत् ।
न पातव्यं न पेयञ्च द्विजैरन्नं न गर्हितम् ॥
सत्यमुक्तं सदा ब्रूयाच्छ्रद्धैर्धर्मं समाचरेत् ।
यमान् स नियमान् कुर्य्याद्गार्हस्थं व्रतमाचरेत् ॥
मातृपितृउपाध्यायान् गुरूंस्त्वमान् सदार्चयेत् ।
एतान् श्रेष्ठान् तथाचान्यान्नित्यं विप्रोऽभिवादयेत् ॥
दमञ्च सर्वदा कुर्य्याद्दानं दद्याच्च सर्वदा ।
दयाञ्च सर्वदा कुर्य्यात्तद्विना नरकाश्रय ॥
दाम्यन् स सर्वदात्मानं दाम्ययन्तु सदा द्विजः ।
दयध्वमिति वै वेद्यः । श्रुतिर्वाजसनेयिकी ॥
एत्त्रिधा कारकं कुर्य्यात् स्तनयित्नुध्वनिन्दिवि ।
ददेदेति दम दानं दयामिति च निघरेत् ॥
रसारसैः समा ग्राह्या देया अपि च नान्यथा ।
न रसैर्लवणा ग्राह्या समतो चौनतोऽपि वा॥
तिला अपि समा देया यस्मात् अपिच नान्यथा ।

न संवदेच्च पित्राद्यैः पतिताद्यैर्न संविशेत् ॥
न मतिं नीचवर्णाय दद्यादुच्छिष्टमेव च ।
मतिं शूद्रस्य यो दद्याद्दोषैवैन पर्युपासते ॥
न किञ्चित्तस्य चादेयं व्रतादिनियमादिकम् ।
आचक्षाणस्तु तद्धर्मं नरकाग्नौ प्रपद्यते ॥
नाद्यादन्नं निषिद्धस्थं स्वप्याद्वा नाहरात्रिषु ।
वेदविद्यावितानानि विक्रीणीत न कर्हिचित् ॥
नापात्यानि रमाद्यानि भूदत्तिस्थान्यथेऽपि च ।
नापघ्येत्तु स्वपाणिभ्यां न च कण्डूतिकृद्भवेत् ॥
पादुका नच पालाशा न दन्तादिनिकृन्तनम् ॥
नोत्सृज्यं ष्ठीवनाद्यन्तु कदाचिद्वै गवादिषु ।
पद्भ्या स्पृश्यो गवाघ्रातो नोच्छिष्टो न च तद्गतिः ॥
न लङ्घ्या वस्त्रतन्त्र्यादि वाय्वग्न्योर्नान्तरा गतिः ।
न द्वयोर्विप्रयोर्नाग्न्योः सौरभेयोः पतिस्त्रियोः ॥
न विप्राग्न्योर्विप्रपिण्डौ नो ग्राह्यौ विष्णुताक्ष्र्ययोः ।
सौरभेयोर्नाग्न्योश्च माहेयीजन्ययोरपि ॥
भानुव्योमादिकानान्तु न कुर्यादन्तरागतिम् ।
भोजनादिषु नासक्तां पश्येन्न विगतांशुकाः ॥
न गच्छेत् स्त्रीं रजोयुक्तां न च तया सहाश्नुयात् ।
उत्तरीयं विना नैव न नग्नो न शयीत च ॥
न गेहे चैव मार्गादौ न निषिद्धकुसुमञ्च ।
नापगाह्यपचर्यादि नचविष्ठा गृहान्तिके ॥
स्मृतिकालातियानि च शुभमिच्छन्विसर्जयेत् ।

यश्चेन्द्रचापभद्राद्या मूलनाम्ना न निर्दिशेत्।
इन्द्रचापं ध्यायन्ति ये न खातव्याः परस्य ते।
वर्जयेद्दादनस्यैव पार्श्वे काग्रभोजने॥
पैशुन्यं मर्मभेदञ्च न वदेन्म्लेच्छभाषितम्।
प्राकृत वक्रागस्याणि पर्यण्डहेतुकानि च॥
न करं मस्तके दद्यान्मस्तके न करं तथा।
न जातु नो शिरोधार्य्यं न प्राड्तशिरा भवेत्॥
वेनाश्च यश्च कदर्य्यचौराः क्लीबाभिशस्तागणिकासु जातु।
यो वृद्धजीवी गणदीक्षका ये तेषां न भोज्यं ह्यशनं द्विजातेः॥
क्रूरातुरा वृद्धचिकित्सकाश्च या पुंश्चली यौ च विरुद्धव्रत्।
व्रात्याग्रसन्त्या श्ववंतो जितार्थ्यं अग्राह्यमेषामशनं द्विजस्य॥
ये दाम्भिका येच सुवर्णकारा उच्छिष्टभोजी पतिताश्च यश्च।
ये पुत्रभार्या पञ्चयाचका ये विप्रस्य नैकोऽपि न भोज्यमन्नम्॥
यः सोमयस्य सुरतासुचक्र क्षीराज्यमास लवणाजिनानि।
सोमाज्यलाक्षाश्च तिलान् फलानि एषां न विक्रीत कदन्नमाद्यम्॥
जीवन्ति नित्याग्निरसान्वयाना कर्माच कार्य्येऽपि च तन्तुवायाः।
राजा नृशंसो रजकः कृतघ्नो भोज्यन्न तेनैव च द्विजस्य॥
ये चैलधाराश्च सुराकृता ये शूल्यं न याचोऽहृतं वदाय।
ये वन्दिनो येऽपिच याचकाश्च विप्रस्य चैनोऽपि न भोज्यमस्याः॥
मध्यान्नमयूच्छिष्ट दधिक्षीरस्लोदनः।
मनुष्यः फलपूर्णाश्च कुशवत् पुष्पमौषधः॥
कौशेयकेशकृतया नीरं विष वनमाया।
शाके कुशकपिण्याक गन्धर्नायधिमूलका॥

विक्रीणन्ति य एतानि वस्तूनि मनुजाधमाः।
तेषामन्नं न भोक्तव्यन्तथोपपत्तिवेश्मनः॥
यो वडस्य कदर्यस्य भुञ्जीतान्नं द्विजाधमः।
तद्गृह्यानद्रव्यस्य स्यानुमृतो विट्शूकरो भवेत्॥
योऽन्नं वार्धुषिकस्यापि जालापत्यादिकस्य च।
अन्यस्यापि निषिद्धस्य भोऽनन्तं नरकं व्रजेत्॥
पाणिगृहीतभार्यायां सत्यां यस्तु नराधमः।
शूद्रीऽशेन यो भङ्क्ते पतित, स सदैव तु॥
त्यक्ता ये नोढभार्यान्तु त्यक्तः स पितृदैवतैः।
देवादित्यक्त. पापीयान् शूद्रादप्यधिकः स्मृतः॥
यः शूद्रीं भजते नित्यं शूद्री तु गृहमेधिनी।
वर्जितः पितृदैवैस्तु रौरवं यात्यसौ द्विजः॥
यः शूद्रायां स्वयं जातो ह्यस्यां सोऽपि तत्सुतः।
अन्यस्याश्च पुनः सोऽपि किन्तस्य प्रेत्य चिन्तनम्॥
सर्वान् भुञ्जीत नरकान् विशति स्विक्तवर्जितान्।
रौरवादीन् क्रमेणैव पापिष्ठो यावदन्तरम्॥
हेमन्तशिशिरर्त्वोश्च प्रोष्ठपद्या परस्य च।
पक्षत्रयपक्षेषु कार्य्या साग्निभिरष्टका॥
हेमन्तशिशिरे चैका एकैकाथ तथापरा।
प्रोष्ठपद्यां द्विजातिस्त्वो ह्यष्टका इति केचन॥
दर्शश्च पौर्णमासश्च तथैवाग्रयणद्वयम्।
चतुर्मासीव्रतान्येव कार्याणि साग्निकैर्द्विजैः॥
अनूचानः क्रतुं कुर्युः सदैव व्रतचारिणः।

अग्निहोत्ररता नित्यं मातापित्रादिपूजकाः ॥
प्रतिग्रहनिवृत्तांश्च जपहोमपरायणाः ।
वृत्तवन्तश्च ये विप्राः सांतृकास्ते प्रकीर्त्तिताः ॥
सङ्क्रान्तिरर्कवारश्च व्यतीपातो युगादयः ।
शुभर्क्षदिनयोगाश्च कार्य्या साग्निभिरष्टका ॥
न शूद्राय भिक्षेत् नैतत् कर्त्तव्य कर्म च द्विजैः ।
चण्डालत्वमवाप्नोति यज्ञार्थं शूद्रयाचकः ॥
लब्ध यज्ञाय स विप्रो न दद्याद्यज्ञकर्मणि ।
स वायसोऽथ वा भूमः काकोवाथ प्रजायते ॥
गिरोऽभ्यवृत्तिर्मिरक्ष तथा चैकाहिकाश्रमः ।
त्राशाहिकायनो वा स्यात् कुम्भीकुशलधान्यकः ॥
पूर्वे पूर्वतरः श्रेयानेषां सद्भिः प्रकीर्त्तितः ।
सोमपः स्यात्त्रिवर्षान्न ततपूर्वस्तत्समागनः ॥
सोमेष्टिं पशुयज्ञञ्च कुर्य्याच्च प्रतिवासरम् ।
इष्टिर्वैश्वानरी यातु कर्त्तव्वै तदसम्भवेत् ॥
सत्यामर्थस्य सम्पत्तौ न कुर्य्यात्रीनदर्जणाम् ।
ततञ्चतश्च भवेदर्थं प्राप्नुयात्पशुयोनिताम् ॥
अशापूतञ्च दातव्य मात्ते दाम समर्पितम् ।
याचितेऽपि हि दातव्य पूत स्वश्रद्धया धनम् ॥
शूद्रार्थं ब्राह्मणोऽश्नन्वै मासं मासार्द्धमेव वा ।
तद्योनावभिजायेत सत्यमेतद्विदुर्बुधाः ॥
श्राग्शूद्रस्यादशूद्राभ्यो मृतश्चैवोपजायते ।
द्वादशं दश वाष्टौ च भूमशूकरपुष्करः ॥

उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः ।
जुह्वन्वापि जपन्वापि गतिमूर्ध्वां न विन्दति ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् ॥
तस्माच्छूद्रं न भिक्षेत यज्ञार्थं सद्द्विजातयः ।
श्मशानमिव तच्छूद्रस्तस्मात्तं परिवर्जयेत् ॥
कणानामथ वा भिक्षां कुर्याच्चेद्वृत्तिकर्षितः ।
स शूद्राणां गृहे कुर्वन् न तत्पापेन लिप्यते ॥
विशुद्धान्वयसञ्जातो निवृत्तो मांसमद्ययोः ।
द्विजभक्तिर्वणिग्वृत्तिः सच्छूद्रः संप्रकीर्तितः ॥
उदक्यास्पृष्टसंस्पृष्टं वीक्षितं चाप्युदक्यया ।
सुस्पृष्टं शकुनोत्सृष्टं प्रयत्नेन विवर्जयेत् ॥
उच्छिष्टञ्च पदा स्पृष्टं शुना च पतितेक्षितम् ।
पर्युषितञ्च विट्कस्य केशकीटाद्युपाहतम् ।
पर्युच्छिष्टं गवाघ्रातं प्रयत्नेन विवर्जयेत् ॥
नाश्नीरन्नेतदन्नं सामिषन्तो द्विजातयः ।
शूद्रायामपि भोज्यान्नाः स्युर्दासनापितादयः ॥
सस्नेहमशनभोज्यं चिरस्थमपि यद्भवेत् । -
अनुक्ता अपि भोज्याः स्युः सद्यश्चेता यवादयः ॥
शमिक्षा जलसुमयासवादि वैर्जयेत्सुधः ।
स्त्रीणामेकशफोष्ट्रीणां तथारण्यकमाविकम् ॥
प्रसूता ब्राह्मणी गौश्च महिष्यजा तथैव च ।
दशरात्रं न गृह्णीत भूमिष्ठं च नवच्छलम् ॥

शाकादिकञ्च विट्जातं कवचानि च वर्जयेत्।
मांसकीटादिभिर्जुष्टं प्रयत्नेन विवर्जयेत्॥
एवं येऽकव्यमश्नन्ति तथा विष्ठाभुजश्च ये।
शुकाटिट्टिभदात्यूहान् कपोतपिकसारिकाः॥
सेधाद्यान् पञ्च पञ्चैव पञ्च सिङ्घाद्यान्मत्स्यकांश्च षट्।
धर्मशास्त्रोदितानद्यात् सर्वाकारांश्च वर्जयेत्॥
भक्ष्याणां स्त्यजेन् मांसं श्राद्धयज्ञोत्सवेष्वपि।
कृत्वा च विधिवत् श्राद्धं नाद्यमतिथिनामिषम्॥
यदैश्वर्यसम्पत्तिस्तदैवामन्त्रयेद्द्विजान्।
कृत्वाच्च विधिवत् श्राद्धं यद्यात् तत् स्वयमश्नुयात्॥
नाद्यादविधिना मांसं स्वत्युदिष्टेऽपि धर्मवित्।
भक्षयन्नरके तिष्ठेत्पशुलोमसमाः समाः।
गृहस्थोऽपि हि यो नाद्यात्पिशितन्तु कदाचन॥
स साक्षान्मुनिभिः प्रोक्तो योगी च ब्रह्मलोकगः।
न स्वयञ्च पशुं हन्याच्छ्राद्धादिक उपस्थिते॥
क्रव्याद्यैः सारमेयाद्यैर्हतं व्याघ्रादिभाहरेत्।
एतच्छाकवदिच्छन्ति पवित्रं द्विजसत्तमाः॥
समर्थो यस्य यस्तु स्यादस्य दत्त्वा तु देहिनाम।
सर्वाभिति निरातङ्को लोमहृष्टं निगद्यते।
अन्नादेरपि भक्ष्यस्य स्नेहमद्यामिषस्य च॥
महाफलानि हन्तौ स्यात् प्रवृत्तिः स्वर्गसाधना।
एकोऽप्यष्टशतमखेन यजेत पशुना द्विज।
अन्योन्यं मांसमश्नाति स्वर्गप्राप्तिस्तयोः समा॥

हेम राजत शङ्खस्य ताम्रस्य वैणवस्य च ।
चर्मणोरश्मवस्त्राणां शुद्धिर्जायेत वारिणा ॥
तदादियज्ञपात्राणां धान्यानां वाससामपि ।
अन्येषां अयरूपाणां प्रोक्षणाच्छुद्धिरिष्यति ॥
मार्जनाद्यज्ञपात्राणां दहनेन मृदर्मणि ।
सम्भोगे यत्र कैवर्णैः शुद्धता कोशिकाविधेः ॥
श्रीफलैरंशुपट्टानां सारिष्टैः कुतपस्य च ॥
अश्मयानि पुनः पाकैः क्षौमाणि सितसर्षपैः ।
शुद्धं तु कारुहस्तस्य पण्यं यत् स्यात्प्रसारितम् ॥
भैक्षस्य मक्षिकाच्छुद्धात् पिष्टं मांसान्वयस्य तु ।
स्त्रीमुखस्य सदा शुद्धं भूमिर्लेपविवर्जिता ।
अपरा दहनाच्चैव गृहं मार्जनलेपनैः ॥
द्रवद्रव्याणि शुध्यन्ति वह्निना प्लावनेन च ।
क्रव्यादश्वात् हृतं मांसं सर्वदा शुचि कीर्तितम् ॥
तृप्तिकृत् सौरभेयाय स्वभावात् सह्यदा गतिः ।
वदन्ति सूरयो वारि पवित्रमिति सर्वदा ॥
गौर्वह्निश्च वनच्छाया जलमश्वो वसुन्धरा ।
विप्रुषो मक्षिकानाञ्च न दुष्यन्ति कदाचन ॥
स्तुतिं प्रस्थापने वत्सः अजाश्वौ मुखतस्तथा ।
न तु गोर्मुखतो मेध्या न कस्य मुखजा मलाः ॥
सोमभास्करयोर्भाभिः पथशुद्धिः प्रकीर्तिता ।
श्रोत्राधरौ श्मश्रुकरौ मस्नेहौ भोजनादनु ॥
न दुष्येत्स्वरुजः प्राह बालवृद्धौ स्त्रियोर्मुखम् ।

गत्वा रथ्यादिके चैव शुद्धिराचमनेन तु ।
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा ॥
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ।
पद्माश्मलोहफलकाष्ठ चर्मसागस्य तोयैः ॥
स्वयमेव शौचात् पुंसां निशास्वप्नि निःसन्त्रयम् ।
न स्त्रीणां सदा शुद्धिर्विहिता च सतामपि ॥
नभसः पञ्चदश्यां तु पञ्चम्यां च तथापरे ।
नभसस्य चतुर्दश्या सुपाकर्म यथोदितम् ॥
तद्विदः केचिदिच्छन्ति नभसः श्रवणेन तु ।
हस्तेन वाथ पञ्चम्या मध्यायानां वदन्ति तत् ॥
यत्र शाखोपवीतः स्याद्ब्रह्मचारी द्विजोत्तमः ।
तच्छाखा विहितं तस्य उपाकर्मादि कीर्त्तने ॥
यतो वेदाधिकारत्व वेदपाठस्य कीर्त्तने ।
अनुपाकृतविप्रादेर्वेदाध्ययन दुष्कृतम् ॥

मुञ्जोपवीताजिन दण्डकाष्ठम्
त्याज्यं न तत्स्याद्व्रतचारिणा अपि ।
अक्लिष्टमेकोच्छलोपपापम्
सस्कारमन्यं न पुनर्नयेत् ॥

ओषधीनां तु रङ्गावे स्वशाखाविहितन्तु यत् ।
रोहिण्या च सहस्यस्य उपाकर्माणि कुर्वते ॥
न भवेदनुपाकर्म नाह्मणः स्नातको व्रती ।
कर्मच्युतो भवेद्व्रात्यो व्रात्यान्निष्कृतिकः शुचिः ॥
तथा ततस्त्वादनध्यायो ह्यतगुर्वादिषु त्र्यहम् ।
मित्रकादिष्वहोरात्र मधीत्यारण्यकः शुचिः ॥

अष्टकासु तथाष्टम्यां पौर्णमास्यां शशिक्षये ।
मन्वादौ युगपद्यादौ विन्दुपातात् ग्रहेऽपि च ॥
चतुर्मासि द्वितीयायां चतुर्दश्यामहर्निशम् ।
अहोरात्रं नृपे संस्थे व्रतिनि श्रोत्रिये यतौ ।
अत्र त्र्यहमनध्याय मिच्छन्ति चापरे त्र्यहम् ॥
अशौचसूतकान्तं च यावच्छुद्धिस्तयोर्भवेत् ।
देशान्तरगते प्रेते श्रुतेऽपि स्यादहर्निशम् ॥
गुर्वादौ वा नृपत्यादौ इति वासिष्ठोऽब्रवीत् ।
प्रतिग्रहे त्वहोरात्रं भुक्त्वा श्राद्धकमेव च ॥
तद्ध्रात्वा मृत्युरनध्याय मनुमन्या वर्हनिशम् ।
यथाद्रौ च दशे भोक्ता दशोरात्रा विदुर्बुधाः ।
अकाले वा हते दृष्टिश्छिद्रायेव सप्तमाः ।
सामेषु दुःखितानाञ्च खरादीनाञ्च निःस्वने ॥
पतितश्वापशूद्रान्त्यसन्निधाने न कीर्त्तयेत् ।
आमन्येव शुचौ देशे विद्युत्स्तनितरोहिते ॥
वधे च कलहे देशाश्रये लोकविग्रहे ।
पांशुवर्षेऽम्बुमध्ये च दिग्दाहग्रामदाहयोः ॥
नीहारे च भवेद्विद्वान् सन्ध्ययोरुभयोरपि ।
धावंश्च न पठेद्विद्वान् पूतिगन्धेतथैव च ।
विशिष्टेचागते गेहे गवाश्वनिर्गमे तथा ॥
भोजनायोपविष्टस्य स्थितस्याद्र पाणिनः ।
वान्ते चान्ते तथा जीर्णे महापातेऽतिमारुते ॥
राजा दृष्टौ च यानादौ आरूढस्य तथा द्विजः ।
एतानन्याञ्च तत्कालान् अनाध्यायान्विदुर्बुधाः ॥

यो वर्जयेदनध्यायान्वेदाध्ययनकृद्द्विजः ।
भवन्ति तस्य सफला वेदाः प्रोक्तफलप्रदाः ॥
येच तेषु पठन्त्यदा पाठलोभेन लोभिताः ।
न शास्त्रतामवेद्विद्या निष्फला च तथा द्विजः ॥
यः पठेद्विधिवद्वेदान् तत्प्रतीन्द्रियसंयमी ।
ब्रह्मत्वमिह लोकेऽपि ऐश्वर्यसुखभाक् भवेत् ॥
जनान्तरं शृण्वतो यस्तु मार्गे गच्छन् पठेद्द्विजः ।
निष्फलास्तस्य वेदाश्च वेदवि वदोपभाक् ॥
यः पठेत् स्वरहीनन्तु लक्षणेन विवर्जितम् ।
सङ्कीर्णग्राममध्ये तु स भवेत् वेदविक्रयी ॥
ये स्वाध्यायानधीयीरन् अनध्यायेषु लोभतः ।
वज्ररूपेण ते रुद्रा तेषां देहे व्यवस्थिताः ॥
नाक्रामेद्रमरादीनां च्छाया तथा परस्त्रियः ।
वान्तष्ठीवनविण्मूत्र कार्पासास्थिकपालिकाम् ॥
तानश्रेयाः स्पृश विप्राश्रगान् स्पृशेय् द्विजाः ।
स्त्रियं कामं च सा काङ्क्षन्स्पृशेत् मर्म कस्यचित् ॥
नित्यं वर्त्तेत चाशस्त्र· धर्मंश्च नित्यमर्चयेत् ॥
न किञ्चित्ताडयेद्धीमान् सुतं शिष्यश्च ताडयेत् ।
ताडयेन्नाभितोऽधस्तात्स्तानन्यत्र ताडयेत् ॥
आचारेण सदा विद्वान् वर्त्तते यो यतेन्द्रियः ।
स ब्रह्म परमाप्नोति चारणोऽमुत्र चेह च ॥

आचारमूलं श्रुतिशास्त्रमत्त आचारनाशान्न तदुक्तकृत्यम् ।
आचारपर्णानि हि वाग्निशाखोत् आचारमुख्यानियगोधनानि ॥
आचारदृक्षस्य फल हि नाकमाद्यान्न सुस्वादुरसश्च मुक्तिः ।

तस्मादनन्त फलदन्तु तत्त्वमाचारमेवाश्रय यत्नपूर्वम्॥
ये धर्मशास्त्रे विहिताश्च केचिद्धर्मा द्विजाग्र्योऽपि तेच सर्वे।
यत्नेन कार्या पितृदेवभक्तैः श्राद्धानि कार्याण्यथ तानि वक्ष्ये॥
यत्नेन धर्मो गृहमेधिविप्रै प्रीतेन वाचा वपुषा च कार्यः।
आयु प्रजा श्री र्भुवि पूजितत्वं तस्माल्लभन्ते दिवि देवभोगान्॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां धर्मसंहितायां चतुर्थोऽध्यायः।

---

## पञ्चमोऽध्यायः।

आद्वश्चन्द्रार्कचन्द्रे मन्वाद्यायंश्च सङ्क्रमे।
व्यतीपातविषुवत् छायायन्ममातार्थ सत्त्विषु॥
अष्टका नयने द्वे च आद्य प्रति यदा रविः।
पुण्य श्राद्धस्य कालोऽयमपि परिकीर्तितः॥
युगादिषु च कर्त्तव्य मन्वन्तरादिकेऽपि च।
श्राद्धकालोऽत्र प्रोक्तो मन्वाद्यैर्धर्मकर्तृभिः॥
नवान्नं नवोदकञ्चैव नवछत्र तथाम्बरम्।
नाव्येद्य येषु येऽश्नते पितरो हि यमालयं॥
वाद्या: पौनर्भवो रोगी पिशुनो वृद्धिजीवकः।
कृतघ्नो मत्सरी क्रूरो मित्रभुक् कुनखोऽगुदः॥
*श्वित्रिणस्तनयश्चित्तोपायदन्तासकीर्तिमि।*
हीनाङ्गश्चातिरिक्ताङ्गो विक्रयी परनिन्दकः॥
क्लीबोऽभिशस्तवाक् दुष्टस्तत्राध्यापकस्तथा।
कन्यादूषी वणिग्वृत्तिर्निग्नः सोमविक्रयी॥

भार्याजितोऽनपत्यश्च कुण्डाशी कुण्डगोलकः ।
पित्रादित्यागकृत्तेन वृषली पतितस्तु ॥
अनुक्तप्रत्तिसन्त्यागः परिपूर्वापतिस्तथा ।
अजापालो माहिषिकः कर्मदुष्टाश्च निन्दिताः ॥
योऽसत्प्रतिग्रहग्राही दर्दुरित्य प्रतिग्रही ।
यक्ष्मस्तूनकदूतौ च पितृश्राद्धेषु वर्जिताः ॥
एकादशाहे भुञ्जन्तः शूद्रान्नरसमन्विताः ।
गुरुतल्पगो ब्रह्मघ्नो दस्युश्चोपपतिस्तथैव ॥
प्रेतस्पृक् चैलनिर्णेक्ता चोपयाचकयाचकौ ।
बककाकविडालाश्च शूद्रहस्तेन गर्हिताः ॥
वाक्दुष्टोऽसदृशको नित्यमप्रियवाक्यदः ।
आसक्तो द्यूतकामादावतिवाक् चैव दूषितः ॥
निराचाराश्च ये विप्राः पितृमातृविवर्जिताः ।
विद्वांसोऽपि हि नाभ्यर्च्याः पितृश्राद्धेषु सत्तमैः ॥
न वेदैः केवलैर्वापि तपसा केवलेन च ।
सद्वृत्तैः किन्तु ते प्रोक्ताः पावना ब्राह्मणास्तु च ॥
यत्र वेदास्तपो यत्र यत्र वृत्तं द्विजाग्रजे ।
पितृश्राद्धेषु तं यत्नाच्चिरं चिरं समर्चयेत् ॥
वेदशास्त्रार्थविच्छान्तः शुचिर्धर्ममनाः सदा ।
गायत्रीब्रह्मचिन्तात्मा पितृश्राद्धे स पावनः ॥
रथन्तरं बृहज्ज्येष्ठं सामवित् त्रिसुपर्णकः ।
त्रिमधुश्चापि यो विप्रः पितृश्राद्धेषु पूजितः ॥
मातामहश्च दौहित्रो भागिनेयोऽथ मातुलः ।
मातृस्वस्रेयश्च तथा तथा मातुलजोऽपि यः ॥

जामाता श्वशुरो बन्धुर्भार्या भ्राता च तत्सुतः ।
सुहृदश्च सदाचारा ये ते श्राद्धेषु पावनाः ॥
ऋत्विग्गुरुरुपाध्याय आचार्यः श्रोत्रियोऽपरः ।
एते श्राद्धेषु वै पूज्याः ज्ञातिसम्बन्धिबान्धवाः ॥
अग्निहोत्री च यो विप्र आवसथ्याग्निकोऽपि च ।
पितृमातृपरावेतौ भोक्तार्थौ हव्यकव्ययोः ॥
काव्येकवृत्तिजीवी यो भोक्ता मात्रादिकेषु च ।
षट्कर्मनिरतः पूज्यो हव्यकव्ये सदैव हि ॥
स्ववृत्ति सदाचारो मातादिभक्तितत्परः ।
शुचिः षट्कर्मयुक्तश्च हव्यकव्येषु पूजितः ॥
गुणानुरूपतो यस्तु विद्याचारादिसंयुतः ।
स पूज्योऽनभियस्तः स षट्कर्मनिरतो द्विज ॥
इत्युक्तगुणसम्पन्नान् ब्राह्मणान् पूर्ववासरे ।
निमन्त्रयेत सद्भक्त्या नियोगस्थानपूर्वकम् ॥
सव्येन देवतार्थन्तु पित्रार्थमपसव्यवान् ।
ततस्तै रतिव्य स्यादुक्तं पितृष्टतद्विजै ॥
जितेन्द्रियैस्तु भाव्यं स्याद्योगावमतन्द्रितैः ।
तस्मिन्नहनि वा प्रात र्येव श्राद्धमवस्थितम् ॥
निमन्त्रयेत तान् भक्त्या तैश्च भाव्यं जितेन्द्रियैः ।
विप्रैरुपार्श्वैष्ठस्थाः पितृमातामहादयः ॥
*भुञ्जन्ति अमयः श्राद्धे तथा पिण्डाशिनोऽपि च ।*
निरुन्ध्येत द्विज श्राद्धे न यजीत स्त्रिया सह ॥
अध्वानं न च वै यायाच्च ब्रूयादनृतन्तथा ।
नाधीयीत दिवास्वापं न कुर्वीत न सम्वदेत् ॥

न म्लेच्छपतितैः सार्द्धं न वदेच्च निषिद्धकम् ।
प्राङ्मुखौ दैविकौ विप्रौ विप्रास्त्रय उदङ्मुखाः ॥
एकैको वा भवत् स्या देवस्यत्ताविति क्रमः ।
पात्र वा दैविके कृत्वा विप्र एकस्तु पैतृके ॥
इति वा निर्वपेत् श्राद्धं निर्धनश्चान्यदाचरेत् ।
गत्वारण्यमभाष्य ऊर्द्ध्वबाहुर्विरौत्यदः ॥
निरन्नो निर्धनो देवाः पितरो ह्यागृणध्वम् ।
न मेऽस्ति वित्तं न गृहं न भार्या
श्राद्धं कथं वः पितरः । करोमि ।
वनी प्रविश्येह कृतं मयोच्चै-
र्भुजाहते वर्त्मनि मारुतस्य ॥
श्राद्धमेतद्भवता भवत्तम्
मह्यं दयध्व पितृदेवताश्च ।
अस्या वचोऽस्ति भुजावतस्तन्
दिवाच दाति समुपोष्य तिष्ठेत् ॥
भवेत्स चैतेन कृतेन तेषा
यथा न मुक्तः पितृदेवतानाम् ।
निर्वित्तनिर्भोग्य निराश्रयाणाम्
श्राद्धस्य मार्गः प्रथितो मुनीन्द्रैः ॥
ख्यातं मया कदित्वा वः पितरः श्राद्धदेवताः ।
श्राद्धार्थेन विमुक्तोऽस्म भवत पितरो मया ॥
कृतोपवासः स तस्मात् श्राद्धर्णाद्विप्रमुच्यते ।
एतैश्चापि न यः कुर्यात् पितरस्तेन वै हतान् ॥
सम्पन्नावथ पात्राणामेकैकस्य चयस्त्रयः ।

पित्रादौ ब्राह्मणाः प्रोक्ताश्चत्वारो वैश्वदेविके ॥
द्वौ वापि दैविके विप्रौ चैकैकोवा न दोषभाक् ।
स्यान्मातामहिकेऽप्येवमेकोऽपि वैश्वदेविके ॥
नतु वैकन्तु सर्वेषां आश्वलायनमतं स्मृतम् ।
पितृणामर्चयेद्विप्रो मन्त्रपिण्डनिदर्शनम् ॥
न मातामहिकं श्राद्धं श्रोतुसुतान्तु साग्निके ।
अनग्निकस्य तत् कुर्य्यादिति केचिन्मतं विदुः ॥
साग्निकस्यापि कार्यं स्यात् श्राद्धं मातामह द्विजै. ।
षड् दैवत्यमितीत्येकेऽप्येके तु पार्वणद्वयम् ॥
अपुत्रस्य पितृव्यस्य तत्पुत्रैर्भ्रातृजो भवेत् ।
स एव तस्य कुर्वीत पिण्डदानोदकक्रियाः ॥
पार्वणेनैव कार्य्यंस्यात् पुत्रवद् भ्रातृजेन तु ।
पितृस्थाने तु तं कृत्वा शेषे पूर्ववदुच्चरेत् ॥
श्राद्धं पत्यापि कार्यं स्यात् अपुत्रायास्तु योषितः ।
तस्यापि हि तया कार्यमेकत्वं हि तयोर्यतः ॥
भ्रातुर्ज्येष्ठस्य कुर्वीत कार्यं ज्येष्ठोऽनुजस्य च ।
देवहीनस्तु तत् कुर्यात् इति धर्मविदो विदुः ॥
पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ।
पुत्राभावेतु पत्नीच तदभावे सहोदरः ॥
पित्रादीनान्तु कर्त्तव्यं समीचन्ते यतस्त्वमी ।
नाचरेद्यास्तु ते सर्वे कृते तु स्यान्महत् फलम् ॥
पितामहस्य चान्येषां दस्य जीवन्नवा द्विजः ।
प्रत्यक्षास्तेऽपि वै पूज्याः संस्थित्यर्थं यतश्च तत् ॥
विद्यमानस्तथा यः स्यात् प्रत्यक्षः पूज्य एष सः ।

गौतमस्य मतं ह्येतदिति वाशिष्ठजोऽब्रवीत् ॥
विद्यमाने तु पितरि श्राद्धं कर्त्तुमुपस्थितः।
पितृवर्त्पितृपित्रादेः कुर्य्याच्छ्राद्धमसंशयम् ॥
पुत्रिकायाः सुतः श्राद्धं निर्वपेन्मातुरेव सः।
तत्पितुर्निर्वपत्यस्मात् तृतीय तु पितुः पितुः ॥
धृतएव द्विजः पुत्रीमुद्दिश्य कायसन।
उद्दोढ़ुः पुत्रः पुत्रोऽसौ पुत्रोऽसौ मातुरेव हि ॥
पुत्त्रश्च दुहितुश्चैव समौ तौ धार्मिकौ पथि।
अर्थकृतोच विप्रोक्तौ तुल्यौ तौ शक्रजोऽब्रवीत् ॥
मुख्यं यथा पितुः श्राद्धन्तथा मातामहस्यच।
पुत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ॥
दौहित्रः पार्वणश्राद्धे कालम् कुतपस्तथा।
तथा सप्तार्हास्त्र विद्वान् इति शास्त्रविदो विदुः ॥
काम्यमभ्युदयश्चैव द्विविधं पार्वणं स्मृतम्।
तथाकामन्तु काम्यं स्यात् वृद्धावभ्युदये स्मृतः ॥
क्षत्त्रियायान्तु यो जातो वैश्यायान्तु तथा सुतः।
ब्राह्मणस्य पितृर्णान्तु निर्वपेतां द्विजायवत् ॥

कृमीभवति पाताले स युगानेकविंशतिः ॥
भोजितेन तु विप्रेण यत्पापं तस्य जायते ।
तेनासौ लिप्यते मूढो यः शूद्रो भोजयेद्द्विजान् ॥
योऽद्य मन्ये द्विजांश्चान्तु शूद्रास्तेन भोजयेत् ।
स गच्छेन्नरकं घोरं पुनरावृत्तिदुर्लभम् ॥
यत्किञ्चिद्दुष्कृतं विप्रे पूर्वं कृतन्तु तिष्ठति ।
तेनासौ लिप्यते पापी यः शूद्रो भोजयेद्द्विजान् ।
शूद्रोच्छिष्टन्तु यो भुङ्क्ते मन्ये विप्रोऽधमः स तु ॥
कृमित्वं याति विष्ठाया युगानि ह्येकविंशतिः ।
शूद्रोच्छिष्टन्तु भुञ्जानः सप्ताहानि द्विजोत्तमः ॥
स तद्विष्ठाकृमित्वं हि प्राप्नोति हि ध्रुवं समाः ।
अतो न भोजयेद्विप्रान्विप्रांश्चैव पूजयेत् ॥
शूद्रान्नभोजनाद्युक्त इति पाराशरोऽब्रवीत् ।
अग्नौकरणपिण्डाय कुर्याद्दासाश्रयेन तु ॥
घृतैर्दधिमध्वाज्यैः सम्पृक्तं शर्कैरपि ।
यथाद्यसंस्कृतान्नेन होमादि चरु निर्वपेत् ॥
तेन पयसा वापि नद्यादद्याद्धरत्तथा ।
नामान्नेन द्विजैः कार्यं कदाचिदपि सद्द्विजैः ॥
अर्पयित्वा द्विजो वस्तु तथापि पाकमाश्रयेत् ।
न कुर्यात् परपाकेन नैकपाकेन तु स्वयम् ॥
नैकपाके ह्यकुर्वाणश्च कुर्यात् पराक्भुक् ।
पित्रादीनां सगोत्रा ये तथा मातामहस्य च ॥
तेषामेकेन पाकेन यार्यं पिण्डविवर्जितम् ।
केचित् सपिण्डमिच्छन्ति समगोत्रन्तथा तथा ॥

पिता मातामहान्न स्याद्भिन्नगोत्रतया तथा ।
पृथक् कर्तुमशक्य स्यादर्थपात्राद्यसम्भवे ॥
अवश्यन्तत्र कर्तव्यमेकदेवमणाश्रयेत् ।
येषा नोद्वाहसंस्कारो ह्यन्यसंस्कारसंस्कृता ॥
सङ्कल्पितं भवेत्तेषा श्राद्धं कार्य्य चतोऽहनि ।
केचित्तुपिण्डमिच्छन्ति ब्राह्म संस्कारवत्तथा ॥
आद्योऽपि ब्राह्मसंस्कारस्तस्मात् पिण्डान् प्रदीयते ।
सर्वेष्वपि निमित्तेषु कर्तव्य पिण्डसंयुतम् ॥
पितृया त्रिविधा यस्माद्धति प्रोक्ता मुनीश्वरैः ।
वैश्वदेव सदा कार्य्यो श्राद्धे च समुपस्थिते ॥
पाकशुद्ध्यर्थमेवैतत् पूर्वमेतद्विधीयते ।
वैश्वदेवोऽग्रतश्चैव श्राद्धकाले विशेषत ॥
पाकशुद्धिस्तु विज्ञेया भुक्तोच्छिष्ट तु वर्जयेत् ।
सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैवच ॥
अग्रतो वैश्वदेवं हि पश्चादेकादशेऽहनि ।
एकोद्दिष्टविशेषेण प्रागेव ह्यग्निपूजनम् ॥
कालस्तु कुतपस्तस्य रोहिण पार्वणस्य च ।
यामतथासनन्दद्यात् पितृकार्य्येषु सत्तम ॥
दैविके दक्षिणान्तद्दिति पाराशरोऽब्रवीत् ।
आसने चारनन्दद्याद्वामे वा दक्षिणेऽपि वा ॥
पितृकार्येषु वामन्तु दैवे कर्मणि दक्षिणम् ।
पितृश्राद्धेषु यो दद्याद्दक्षिणं दर्भमासनम् ॥
नाश्नन्ति पितरस्तस्य साध्यानि वत्सराणि षट् ।
तस्माद्वामतो वा पात्रे पितृकर्मणि चासनम् ॥

दैविके दक्षिणा तद्वदिति वाशिष्ठजोऽब्रवीत् ।
कुत्र कालेच कर्तव्यं श्राद्धन्तत् पैतृकं प्रभो! ॥
वदस्व निश्चयन्तत्र विवदन्त्यपरेऽत्र तु ।
पञ्चदशमुहूर्त्ताश्चैतत्प्रागह्नं दिनं स्मृतम् ॥
अपरार्धं स्मृता रात्रि सन्ध्यश्च कुतपीमत: ।
यथा यथा च ह्रस्वत्व पुंस: स्थानेनसो भवेत् ॥
तथा तथा पवित्रं स्यात्काल: श्राद्धार्चनादिषु ।
च्छायेयं पुरुषस्यैनस्तस्माच्छायो भवेदघ: ॥
आधानश्राद्धदानादे: स कालोऽक्षयफल स्मृत: ।
अयुतं तु मुहूर्त्तानामष्टं श्राष्टदशाधिकम् ॥
लिखितं रहोरात्रमिति माध्यन्दिनी श्रुति: ।
दिवसस्याष्टमे भागे मन्दीभवति भास्करे ॥
स काल: कुतपो ज्ञेयस्तत्र दत्तन्तु चाक्षयम् ।
मध्याह्ने तु गते सूर्ये न पूर्वे नच पश्चिमे ॥
तुल्यायसंस्थिते चैव सोऽष्टमो भाग उच्यते ।
मध्याह्नाञ्चलितो भानु: किञ्चिन्मान्दगतिर्भवेत् ॥
स कालो रौहिणो नाम पितृणा दत्तमक्षयम् ।
तस्मात् सर्वप्रयत्ने न रौहिणन्तु न लङ्घयेत् ॥
अकाले विधिना दत्तं न दैवपितृगामि तत् ।
चतुर्दश्यां भवेदत्र तत्राब्दमुभयात्मकम् ॥
श्राद्धन्तत्र च कुर्वीत मासयो रुभयोरपि ।
पिण्डवर्ज्यं ससङ्क्रान्ते संक्रान्ते पिण्डसंयुतम् ॥
षष्टिभिर्दिवसैर्मास स्त्रिंशद्भि: पञ्च उच्यते ।
संक्रान्तिरहित: पञ्च स्तत्र कार्यं विपिण्डकम् ॥

सिनीवालीमतिक्रम्य यदा सक्रमते रवि ।
युक्तसाधारणैर्मासैः स काल उत्तरोभवेत् ॥
सक्रान्तिवर्जित' काल,समल. पापसम्भव. ।
रत्नगाभगर्भेयोऽसौ उत्सवादिविवर्जित ॥
तत्र नैमित्तिकं कार्य्यं श्राद्ध पिण्डविवर्जितम् ।
नित्यं तु सततं कार्य्य मिति पाराशरोऽब्रवीत् ॥
अहरेभिर्गणितैर्यत् स्यात् तत्कार्यं यत्र सर्व्वदा ।
तिथिनक्षत्रयोगश्च जातकर्मादिकाश्च ये ॥
नैमित्तिकाश्च दैवाद्ये कार्य्यास्तेऽपि मलिम्लुचे ।
तीर्थस्नानं गजच्छाया ह्रिमुखी गोप्रदानवत् ॥
मलिम्लुचेऽपि कर्त्तव्य' सपिण्डीकरणन्तथा ।
आग्रहणा ममावास्या मष्टकाग्रहसक्रमम् ॥
अधिमासेऽपि कार्य्यं स्यादिति पाराशरो ऽब्रवीत् ।
नित्यश्च नित्यशः कार्यमिष्टकामाश्च वर्जयेत् ॥
वार्षिक पिण्डवर्जं स्यादन्यस्मिन् पिण्ड सयुतम् ।
इन्दिराग्रहण श्राद्ध मन्वाहार्यञ्च सर्वदा ॥
कर्त्तव्य' सतत विप्रैरिष्टिकामाश्च वर्जयेत् ।
दैवे कर्मणि संप्राप्ते तिथौ यत्रोदितो रवि. ॥
सा तिथिः सकला ज्ञेया विपरीता तु पैतृके ॥
हृद्धिमद्दिवसे कार्यं श्राद्धमाभ्युदिक द्विज ।
चीणमानाहने कार्यं श्राद्ध विद्वन् । क्षयादिकम् ॥
मित्रे चैव सगोत्रे च पितृमातृसहोदरे ।
आमनद्यैव दातव्य भोक्तव्या एवमेव ते ॥
ब्राह्मणं न सगोत्रन्तु पूजयेत् पितृकर्मणि ।

नोपतिष्ठन्ति तत्तेषां किन्तु स्यात् निराशता ॥
स्वगोत्रं भोजयेद्यस्तु पितृश्राद्धेषु वै द्विजः ।
हतास्तु पितरस्तेन न भुक्तमुपतिष्ठति ॥
श्राद्धं कुर्वन् द्विजोऽज्ञानात् स्वगोत्रं यस्तु भोजयेत् ।
स लुप्तपितृदेवः स्यान्नरकं प्रतिपद्यते ॥
तस्मात्तु गोत्रिणं विप्रं भोजयेद्विधिपूर्वकम् ।
ज्ञातिमात्रो न भोज्यस्तु उक्तितैस्तु द्विजोत्तमैः ॥
दक्षिणाप्रवणे देशे श्राद्धं कुर्य्याच्च पैतृकम् ।
पितृणां पावनो देशः स प्रोक्तोऽक्षयतृप्तिकृत् ॥
देशे काले च पात्रे च विधिना हविषा च यत् ।
तिलैर्दर्भैश्च मन्त्रैश्च श्राद्धं स्यात् श्रद्धयान्वितम् ॥
तैजसानि तु पात्राणि स्वार्थाय भोजनाय च ।
कृत्वापात्रा मयान्येके यपरायमपरेविदुः ॥
पलाशपद्मपत्राणि अनिषिद्धानि यानि च ।
तानि श्राद्धेषु कार्य्याणि पितृदेवहितानि च ॥
वृद्धिश्राद्धेषु मन्यन्ते मृण्मयानि तु केन च ।
शौनकस्य मतं सोतत् वृथाकार्य्यन्तु मृण्मयम् ॥
एकद्रव्याणि कार्य्याणि पात्राणि भोजनार्थयोः ।
त्रीणि पैतृककार्य्याणि भेदमेकत्र वर्जयेत् ॥
एकस्य वैश्वदेवानि पैतृकाण्येकवस्तुनः ।
इतिधा तानि कार्य्याणि भेदमेकत्र वर्जयेत् ॥
वटाश्वत्थार्कपत्रेषु न भुञ्जीत कदाचन ।
न जातिकुसुमैर्विद्वान् बिल्वपत्रैश्च नार्चयेत् ॥
सुरभीनागकर्णाद्यैः करवीरैश्च नारकैः ।

बिल्वपत्रैरर्चयेद्विद्वन् पितृश्राद्धेषु गर्हितैः ॥
तद्भुञ्जानैः कृतः श्राद्धं निराशैः पितृभिर्गतैः।
सर्वाण्यपि च पुष्पाणि निषिद्धान्यपराणि तु ॥
वर्जयेत् पितृश्राद्धेषु केतकीकुसुमानि च।
गौरम्भाभृङ्गराजाद्यै मल्लिकाकुलकैरपि ॥
समर्चयेत् द्विजान् श्राद्धे हव्यकव्योदिते द्विजः।
न दद्यात्गुग्गुलं श्राद्धे द्विजानां पितृदैवते ॥
धूपाभावे तु कर्तव्यं घृतधूपं द्विजोत्तमः।
कुङ्कुमाद्यं चन्दनञ्च देयं गन्धविमिश्रितम् ॥
ऊर्द्धं तु तिलकं कुर्यान्न कुर्याच्च त्रिपुण्ड्रकम्।
ऊर्द्धञ्च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि ॥
निराशाः पितरो यान्ति यस्तु कुर्यात् त्रिपुण्ड्रकम्।
पवित्रं यदि वा दर्भं करे कृत्वा द्विजान्नरः ॥
समालभेत् द्विजानञ्च स तु श्राद्धे असुरं भवेत्।
गन्धाद्य विविधा देयाः कर्पूरागुरुमिश्रिताः ॥
शक्त्या वस्त्राणि देयानि तदभावे च निष्क्रयम्।
दीपश्च सर्पिषा देयस्तिलतैलेन वा पुनः ॥
न चान्यतैलैरन्यैस्तु कदाचित् सार्षपादिभिः।
देशधर्मं समाश्रित्य वंशधर्मं तथापरे ॥
सूरयः श्राद्धमिच्छन्ति पार्वणञ्च तथान्यपि।
स्त्रीणामपि पृथक् श्राद्धं न मन्यन्ते स्वधर्मतः ॥
मातामहस्वगोत्रेण मातुलो तु सपिण्डताम्।
मातामहाणामिच्छन्ति मातुलोऽपि सपिण्डताम् ॥
स्त्रीणां स्त्रीगोत्रमप्यन्यात् पुंगोत्रेण हृणां यतः।

सपिण्डीकरणं काले श्राद्धद्वयमुपस्थितम् ॥
देवाद्यं प्रथमं कुर्यात् पितृणां तदनन्तरम् ।
देवाद्यं पार्वणं प्रोक्तं प्रेतश्राद्धं मथापरम् ॥
एकतन्त्रं ततः पश्चात् कृत्वा विप्रांश्च भोजयेत् ।
पितृणां मर्घ्यपात्राणि प्रेतपात्रं मथापरम् ॥
प्रेतपात्रन्तु तत् कृत्वा मिलपात्रे तु न्योजयेत् ।
ये समाना इति द्वाभ्यां पूर्ववच्चैव माचरेत् ॥
सपिण्डीकरणं यस्य कृतं न स्याद्द्विजन्मनः ।
श्राद्धेय तस्य देयं स्यात् पिण्डमेकं तु निर्वपेत् ॥
सपिण्डीकरणाच्चैतत् क्रियाश्चैव यथाक्रमम् ।
एकादशाह्निकं कृत्वा योऽहि मासि च मासिके ॥
वर्षे वर्षे च कर्तव्यं मतेऽहनिच तत् पुनः ।
नापुत्रस्य सपिण्डत्वं केचिदिच्छन्ति तद्विद ॥
विशेषतोऽनपत्यस्य नत्ययत्वाधिकारिणी ।
विद्यमान पिता यस्य स चेद्यदि विपद्यते ॥
तद्वत्सरा सपिण्डत्वं वदन्ति श्राद्धवादिनः ।
श्राभ्युदयिकमप्यसौ श्चर्चा प्रागेव कारयेत् ॥
कुर्यात् परिजनेनैतत् स्वयं वापि द्विजोत्तम ॥
सन्यसन् सर्वकर्माणि तत श्राद्धाय च तद्दिने ।
अग्निदाघदिनश्चैके केचिन्मृतदिनं विदुः ॥
विदेशस्थे श्रुताहस्तु प्राक्चैवाग्नि तु दाहयी ।
सग्रामे संस्थितानाञ्च प्रेतपक्षे प्रशिष्यते ॥
अग्निसर्पादि मृत्यूना पणमासोपरि सत्क्रिया ।
तेषां पार्वणमेवोक्तं चयाहेऽपि च सत्तमे ॥

चन्द्रचर्या नाशकं संयुगेषु यः प्रेतपक्षे च्छतवत्सदण्डः ।
पिण्डतानन्तरं माब्दिकानां भवन्ति तेषां मिह पार्वणानि ॥
च्चयाह्निकादि कार्याणि ब्रूयुर्धर्मविदो जनाः ।
अर्द्धादूर्ध्वमपरन्त्ये च कृत्वा च वैष्णवीं बलीम् ॥
विष्णुर्चन विना नार्वाक् प्रदत्तमुपतिष्ठति ।
विद्‌यता हृत्तपानेन अर्द्धार्थं मङ्गिपेषा वा ॥
हत्यादिकेन यत्‌..स्यात् यत्र तिथौ च तत्र च ।
तन्निमित्तस्य ह्यर्थं मासि मासि च्चयाह्निकम् ॥
कार्त्तिक्यमवधौ याथ तत्र कुर्वीत सत्क्रियाम् ।
अनाथक हतानाश्च च्चयाहेऽपि च पार्वणम् ।
मन्यासवह्नि मन्यन्ते केचि हिद्र खैदिकम् ॥
एकोद्दिष्ट मदैव स्यादेकार्थकपवित्रकम् ।
आवाहनाग्नौ करण हीन तदपसव्यवत् ॥
पूर्वोत्तर श्वे देशे श्राद्ध स्थानमात्र पूर्वकम् ।
शतपीतादिपिष्टेन चर्चितं भूतले च तत् ॥
उद्दिष्टकातुकालस्य तत् प्रागेव विधीयते ।
आभ्युदयिक दैवानि पूर्वाह्ने स्युरिति स्मृतिः ॥
तिलाक्षतोदकैः युक्ता स्यामभाद्भिप्रदक्षिणम् ।
परि क्षाल्यादि प्रष्टेन कृत्वा च शान्तिपूर्वकम् ॥
व्रीहयो यवगोधूमा, अयतायाक्षताः स्मृताः ।
अक्षतामलकैः पिण्डान् दधिकर्कन्धु मिश्रितैः ॥
नान्दीमुखेभ्यो देवेभ्यो मर्दीयात् कुशासनम् ।
पितृभ्य मात्मुखेभ्यश्च प्रदक्षिण मिति स्मृति ॥
कर्कन्धुभि र्यवै पुष्पैः शमीपत्रैस्तिलैस्तथा ।

तेभ्योऽर्घ्यः प्रदातव्यः पितृभ्यो देवतैः सह।
मातामहानामप्येवं पञ्च देवत्वं श्विदु द्विजः॥
माङ्गल्यपूर्वक सर्वं गन्धाद्यपि च धारयेत्।
तृप्तिस्तत् पितृमातॄणां धूपो देयश्च गुग्गुलः॥
घृताभिघार धूपो वा यथा स्यात् परिपूर्णता।
दीपाश्च बहवो देयाः विप्रं प्रति घृतेन च॥
तैलेन केन ये वापि नवनीतेन चैव हि।
मालत्या शत पत्रा वा मल्लिका कुन्दयोरपि।
केतक्या पाटलायावा देया श्राद्धे न लोहिताः॥
वासांसि च यथाशक्त्या दद्यात्तेभ्योऽथ निष्क्रयम्।
परिपूर्णं तथा तत्स्यात्तथाकार्यं सवेदिति॥
सुवेष भूषणै स्तूलकालङ्कारै स्तथाम्बरैः।
कुङ्कुमाद्यनुलिप्ताङ्गै भवन्तु ब्राह्मणैः सह॥
स्त्रियोऽपितु तथा भूता गीतनृत्यादिदर्पिताः।
दुन्दभीनादहृष्टाङ्गा मङ्गलध्वनिकारिकाः॥
सोमसदोऽग्निस्वात्ताश्च तथा बर्हिषदोऽपि च।
सोमपाश्च तथा विप्र स्तथैव च हविर्भुजः॥
आज्यपाश्च तथा वत्स तथा परे सुकालिनः।
एते चान्ये च पितरः पूज्या सर्वे द्विजाग्रजैः॥
वसवश्च तथा रुद्रा स्तथैवादितिसूनवः।
देवता अपि यज्ञेषु स्वायम्भुवादि कीर्तिता॥
एते च पितरो दिव्या स्तथा वैवस्वतादयः।
ये तत्पौत्रा प्रपौत्राश्च असंख्याः पितरः स्मृताः॥
एते श्राद्धेषु सन्तर्प्याः सु निचाद्यै द्विजातिभिः।

सन्तर्पिता इमे सर्वान् प्रीणयन्ति सुधा पितॄन् ॥
प्राक् सङ्केतितान्वि ान् स्नातान् काले समागतान् ।
दत्त्वार्घ्यांन् सतवत् शौचान् आचान्तानुपवेशयेत् ॥
ये स्नान्त्यत स्न न्येऽह्नि चाचमन्ति पिबन्ति च ।
तेषामन्न जायते शुद्धिराचमन्त्यत्रजाह्नि ते ।
सर्वाणि स्रांनि कार्याणि कार्यच्छिद्राणि चात्मन. ॥
तैराचान्तै भवेच्छुद्धिरशुचिस्त्वन्यथा भवेत् ।
ध्यात्वा तैषाणान् मन्त्रान् स्मृत्वा च सर्वमातरम् ॥
प्राप्तस्तान्तौ द्विजान् पृष्टे करिष्ये श्राद्धमित्यथ ।
कर्त्वे करवाणीति पृष्ट्वा मूर्द्ध द्विजाह्वात. ॥
अनुज्ञाये.नघो ह्येतन कुरुष्व यत सतं कुरु ।
ततो दर्भासन कृत्वा देवेभ्य समयं पुन ॥
दक्षिणा आनुसम्भ्वा्य दक्षिणास्तु तथासनम् ।
पात्रद्वय मतोऽर्घ्यार्थं तैजसं वैकवस्तुजम् ॥
प्रासन सपवित्रं तत् समभ्यर्च्य विधानत ।
प्राङ्मुखोऽमरतीर्थेषु शन्नोदेव्योदक क्षयेत् ॥
यवोऽसीति यवास्तत्र तूष्णीं पुष्पाणि चन्दनम् ।

यवोऽसि पुण्यमिति सन्निरतोऽसि
सम स्थान्य प्रभुरस्यसुल ।
सकनृमनुष्य पितृगणस्य तृप्तेर
श्चितावतीर्णोऽसि हितोऽसि पुंसाम् ॥
उत्पादपूर्वक मिमानवतेन वेधा
भूय प्रसन्नमनसा तदुपासित सन्।

विचेप तान् सलिलनाथ प्रसिच्यताङ्‌घि-
तेनाश्वता वरुण दैवतको बभूवः॥
आनीयमान्विधिरिमान्वरुणास्य लोकान्
अन्नप्रभूर्भुवि यवान् वसुलोक दष्टैः।
तत्पिष्ठ पक्कहविषा पितृदेवतानाम्
तृप्ता वसन्ति दिवि दानवरास्तएव॥

ततः सव्य करं न्यस्वा विप्रो दक्षिणजानुभिः।
देवानावाहयिष्येत्र मिति वाच सुदीरयेत्॥
आवाहये त्वनुज्ञा च विश्वे देवाः स आगतः।
विश्वे देवा शृणुतेममिति मन्त्रद्वयं पठेत्।
सोमेन सहराज्ञेति केचित्पठन्त्यदोऽपि च॥
ध्यात्वात्य मन्त्रमावाह्य हस्ते दत्त्वा पवित्रकम्॥
अर्चयेत्तं द्विज पुष्पैः ददात्वर्घं करे पुनः।
विश्वेभ्य स्वेप देवेभ्यस्तुभ्य मर्घ्यं प्रदीयते॥
या दिव्या इति मन्त्रेण पाणो विप्रस्य तं क्षिपेत्।
अपसव्य ततः कृत्वा निर्वर्त्य वैश्वदैवकम्॥
आयो भूमिगताः केचिदादित्ये त्यभिमन्त्र्य च।
पुनस्ताभिकयाभ्याश्च कुर्यात् सुप्रमार्जनम्॥
उदक गन्धधूपांश्च वासांसि चन्दनं स्रजः।
दत्त्वा चापः च मोक्षता दद्यात् पितृ कुशासनम्।
सोदकान् द्विगुणीभूतान् सतिलान् सकुशानपि॥
गोकर्णमात्रकान् सायान् प्रदद्याद्वामपार्श्वतः।
चतुर्थ्यन्तं सगोत्रञ्च पितृनाम च शर्मवत्॥
उच्चार्य्य परयोश्चहृदिदं तुभ्य कुशासनम्।

पितृभ्यं सर्व्वं पात्राणि सपव्य दक्षिणामुखः ॥
तिलोऽसीत्येतदुच्चार्य्य यवस्थाने तिलान् क्षिपेत्।
भूलग्न, सव्यजानु, सन्पितृतीर्थे नवात्वरः।
पितृध्यानमना कुर्य्यात् पितृकार्य्यमशेषतः ॥
आवाहयिष्ये पित्रादीन् अनुज्ञावाहयेति च।
उशन्त स्त्वेति तदीयं यथायन्तु न इत्यपि ॥
अन्येऽत्रपहता असुरा इत्यादि च पठन्ति हि।
अन्यविघ्नव्यपोहार्थं वक्तव्य मिति केचन ॥
प्राग्व द्विजार्चनं कार्य्यं प्राग्वदर्घ्यप्रसेवनम्।
प्राग्वत्सन्तं समुचार्य्यं प्राग्वच्च मुखमार्जनम् ॥

एते तिलास्तु विधिना यदि लोकतस्तु
प्राक्कृत्य भोजन हिते न शुभाय यध्य।
छित्वा मलानि पुरुषस्य च तर्पयाद्यैः
यें घ्नन्ति तेषु भुवि सत्सु कुतो भयं स्यात् ॥
तिलोऽसि चन्द्रामृतदेवतोऽसि
हितोऽस्यशेषे पितृदेवतानाम्।
कर्त्तासि तृप्तिं परमां पितृणां
मुक्तोऽसि ते न भवता विधिसम्भवोऽसि ॥

अर्घपात्राणि सर्वाणि कृत्वा तान् पात्रपालके।
पितृभ्य स्थान मसीतिन्युब्ज कुर्य्यादधश्च तत् ॥
यस्तु हरेद्विप्राणां दर्घ्यपात्रन्तु पैतृकम्।
तद्धि श्राद्ध मभोज्य स्यात् क्रत्वे पितृगणे गते ॥
आश्रित्य प्रथमं पात्रं तिष्ठन्ति पितरो नृणाम्।
श्राद्धे तस्माच्च त द्विद्वानहरेत प्रथम सर्व्वः।

वाचयेत् परिपूर्णन्तु वासोदत्त्वा विधानतः।
अस्त्वेतु परिपूर्णन्तु ब्रूयुरेते द्विजातयः॥
ससर्पिः पात्र मादाय समिधान विधानतः।
नत्वा सर्वान् द्विजान् पृच्छेत्कुर्य्येऽग्नाविति द्विजः॥
कुरुष्वेति त्वनुज्ञातो जुहोत्यग्नौ ततः पुनः।
भोजने पितृविप्राणा मितिमन्त्र मुदीरयेत्॥
अग्निशब्दं चतुर्थ्येकवचनान्त समुच्चरेत्।
कव्यवाहनशब्दं च सोमं पितृमदित्यपि॥
पङ्क्तिमूर्द्धान मेवात्र पृच्छेदिति च केचन।
पितृश्राद्धप्रदानत्वात् सान्तत्त्वे नाथवा पुनः॥
तृतीयां मनसा दद्यात् यमाय त्वेतवा पुनः।
तुष्णीं यत्र तु होमादौ प्रजापतिस्तु तत्तु॥
अह वाक् तस्मिन् वाक् सम्वादो भूम्नगोगिरीः।
अह्व्यवाद्यते वाणी अमुष्याग्नेः प्रजापतेः॥
अग्न्याद्याहुतयः प्रोक्तास्तिस्त्रएव मनीषिभिः।
अग्निषद्विप्रपात्रेषु पश्चात्तज्जुहुयाद् द्विजः॥
अग्नौकरण शेषन्तु पितृपात्रेषु दापयेत्।
प्रतिपाद्य पितृणा तु दद्याद्वै वैश्वदेविके॥
यश्चाग्नौकरणं दद्यात् पितृविप्रकरेषु च।
तेनोच्छिष्ट मेतत् स्यात्समाप्तिस्तावतैव तु॥
पितरः कव्यवक्त्राश्च वह्निवक्त्राश्च देवताः।
अतः पाणौ न तद्देयं देयं पात्रे कुशान्विते।
वैश्वदेविकविप्राणा पात्रे वा यदि वा करे॥
अनग्निक स तद् दद्यात् प्रथम वैश्व देविके।

कृतशेषमशेषाणां पात्रे दद्यात् द्विजोत्तमः ।
पृच्छेत्सर्वांश्च यत् कृत्य सामान्येन द्विजोत्तमान् ॥
दत्त्वान्ये कारयन्त्वान्यं विप्राणां तृप्तिरस्त्विति ।
परिवेश्य मितिं ब्रूयु स्ततोविधिरनन्तरं ॥
प्रागग्नौ करणं दद्यात् अन्यत्दत्त्वा च तृप्तिमत् ।
एकीकृतं तु भुञ्जाना प्रीणयन्तु तथा पितॄन् ॥
परिवेश्यं हविः सर्वं तदर्थं यच्च वै स्मृतम् ।
अभिमन्त्र्य मतः पात्रमपोशनप्रदानवत् ॥
अन्नपूर्णस्य पात्रस्य कर्त्तव्य मभिमन्त्रणम् ।
आपोऽदत्त्वा तु सकलमेव श्राद्धविधिर्वरः ॥
वर्जितानि न देयानि पितृप्रीतिं विजानता ।
हविष्याणि प्रदेयानि वक्ष्यमाणानि वर्जयेत् ॥
निष्पावा राजमाषाश्च कुलत्थ कोरदूषकान् ।
मसूर सितपाकञ्च मुष्मकं शणमर्कटा ॥
आढकाह्रिलसिद्धार्थाः वस्त्राञ्जिस्थनाम्यर्को ।
पिण्याकं परिदृग्धा च मथितञ्च विवर्जयेत् ॥
नापि नीरस निर्गन्धं वारुञ्ज सर्वशालुकम् ।
अमेध्यित च यत्किञ्चित् पर्युषितञ्च वर्जयेत् ॥
लोहितान् वृक्षनिर्यासान् प्रत्यक्षलवणानि च ।
कृता कृष्णतिला वर्णाः सर्वा. पालाण्डुजातय ॥
कृष्णजीरकवंशाग्रालवणानि च विवर्जयेत् ।
कुम्भिकेषु कपालाढ्या कट्फल तण्डुलीयकम् ॥
नीलकाच समच्छत्रा शोभाञ्जन कुसुम्भिकाः ।
कोविदार करञ्जो च सुसुण्यामूलक तथा ॥

कूष्माण्डं गौरहन्ताक इत्यत्याश्च फलानि च।
करीरफलपुष्पाणि विडङ्गमरिचानि च।
जम्बारिका सुजम्बीरा सुकरी वीजपुरिका:॥
तुम्बालाबूनि पिप्पल्यः पटोलं पिण्डमूलकम्।
मल्लूराञ्जनपुष्पं च श्राद्धे दत्त्वा पतत्यधः॥
विपक्वञ्चाइत मांसं मत्स्यञ्च चिरसंस्थितम्।
नित्यश्राद्धेऽपि वर्ज्यं स्यादिद्रदारत्वकीरयोः।
स्वायम्भुवादिभिः सर्वैर्मुनिभिर्धर्मदर्शिभिः।
निषिद्धानि न देयानि पितृणां भक्तितानि च॥
एकेन किञ्चिदपरेण किञ्चित् किञ्चिच्च किञ्चित्पुरसस्तु सद्भिः।
श्राद्धे निषिद्धं ह्यशनादि विद्वन्। सर्वं पितृणां ननु किञ्च देयम्॥
सौवीरसिन्धूत्थलवणादिभिः सुपाकस्य शुद्धिर्भवतीह यस्तु।
तद्वीजपूराम्लरिचादियोगात् सिद्धं प्रदेयं ननु दुष्यतीह॥
श्राद्धन्तु यस्य द्विजदीयमानं पित्रादिकस्यैव भवेन्मनुष्यैः।
यदि स्मृतस्यैव मनस्यभीष्टमासीत् पुरा यस्य तदेव देयम्॥
दातुस्तु यस्मिन् मनसोऽभिलाषः श्रद्धा भवेत्तत्र तु दीयमाने।
श्राद्धेऽपि देयं विधिवत्तदेव तदक्षयस्येति इतिप्रवादः॥
आनीतमम्भोनिधिवत्क्वचित् तत्पाणिदत्तं भवतीह विद्वन्।
हेमाम्बुनिक्षेपपरिस्रुताम्भा मच्छिद्रतामेति पराशरोक्तिः॥
दधीरसारैः क्षयखण्डयोगात् यागार्थिदेयं भवतीह विद्वन्।
ाग्यङ्गधूपान् मरिचादियोगात् पाकस्य शुद्धिं प्रवदन्ति तज्ज्ञाः॥
व्रीहयो यवगोधुमा मुद्गा माषास्तिला स्तथा।
नीवारश्यामसाद्यन्त मकुष्टसम्भवानि च॥
शर्करागुडखण्डानि सक्षुद्रा चोद्रमेव च।

पितृश्राद्धे हविर्मुख्यं यदा तदास्य लोभतः ॥
ईहिना मत्र शरीरपुष्टिर्धाता ससर्जाशननाम किञ्चित् ।
सर्वधान्यान्यमित ह्यवादि वेधा मुनीन्द्रेण पराशरेण ॥
ामशराधादिकर्कटजानि यत्किञ्चदस्मिन् सुखसाररूपम् ।
रण्यजं वा कृषिसम्भव वा सर्वन्तदुक्त ह्यशनेषु विद्वन् ! ॥
ालाद्भव.यन्त्वशनेषु किञ्चित्पङ्कोद्भव वा स्थलसम्भव वा ।
सुच्छसारं बकुराजमस्मिन् सर्वाणि धान्यानि च शूकवन्ति ॥
सर्वसार सतुदत्तं भक्ष्य नि.शूकस्तनान्वितमत्र किञ्चित् ।
ाप्यायनं देहभृता तु सद्य सत्प्रोक्तमत्र ह्यशनेन सद्भिः ॥
प्रतिस्नुतश्च भुक्तश्च कटु तिक्तश्च यस्तथा ।
कैचिद्गुच्छदेयानि ह्यखैत्यप्रतिरोपिताः ॥
तुण्डीकराम्यकावूनि लिङ्गाख्यानि तु यानि तु ।
नित्यं श्राद्धेऽप्यदेय स्याद्राह सत्यवतीपति' ॥
सोङ्कारया वै गायत्र्या दशावर्तितया जलम् ।
पूतन्तु तेन तत्प्रोक्तं सर्वमन्नविशुद्धये ॥
शुद्धवत्योऽथ कूष्माण्ड्य पावमान्यस्तरत्समनाः ।
एतैन वारिणैताभि रन्नशोधनमुत्तमम् ॥
'तद्विष्णोरिति मन्त्रेण गायत्र्या च प्रयत्नतः ।
प्रोक्षयेदशनं सर्वम् शूद्रदृष्ट्यादिशुद्धये ॥
परिवेषयेत्सर्वं सर्वं न कार्यं पाङ्क्तिभेदनम् ।
पङ्क्तिभेदी हयार्थाकी नित्यं ब्राह्मणनिन्दकः ॥
आदेशी वे...क... षष्ठैते ब्रह्मपातकाः ।
ञपङ्क्त्यां विषम ... ि स्नेहाद्भयाद्वा यदिवार्थलोभात् ।
, दृष्टं महर्षिभिः ... ब्रह्महत्या मुनयो वदन्ति ॥

देवान् पितॄन् मनुष्यांश्च भिक्षूनभ्यागतांस्तथा।
अभ्यर्च्य तु न भुञ्जानो वृथापाक इति स्मृतः॥
एतद्वै ब्राह्मणस्यास्ये जुहोमि चाप्यरेऽमृतम्।
इदं विष्णुरिति ह्येतन्मन्त्रमुच्चार्य्य चापरे॥
द्विजाङ्गुष्ठं च तत्रान्ने निवेशयन्ति तद्विदः।
जप्त्वा व्याहृतिभिर्गायत्रीमधुमतीरिति॥
सङ्कल्पाच्च मपोशानं ब्रूयाच्च मधुमध्विति।
आपोशन प्रदेयाश्च न तत्सङ्कल्पयेद्द्विजः॥
सङ्कल्प्य नरके याति निराशैः पितृभिर्गतैः।
आपोशनो देवपित्रोः पापो तिष्ठति यो द्विजः॥
सङ्कल्पं कुरुतेऽज्ञानात् सुखेन पितरो हताः।
जप्त्वाथ वैष्णवान् मन्त्रान् विप्रान् ब्रूयाद्यथासुखम्॥
भुञ्जीरन्वाक्यतास्ते तु पितृदेवहितैषिणः।
अत्युष्णमशनं कार्य्यं वचोवाच्य पितृस्वदः॥
शूद्रश्च शूकरश्वांश्च कुक्कुटानपलापयेत्।
भुञ्जते ब्राह्मणा यावत्तावत् पुण्यं जपेज्जलम्॥
माधमान्यानुवाक्यानि पितृसूक्तानि चैव हि।
ततस्तृप्तान् द्विजान् पृच्छेत् तृप्ताः सन्त्वनुयासनम्॥
तृप्ताः स्मेति द्विजा ब्रूयुः सादन्नं विकिरेद्भुवि।
सकृत् सकृदपो दत्त्वा शेषमन्नं निवेदयेत्॥
यथाचारं तथा कृत्वा पिण्डांस्तदनु निर्वपेत्।
यद्यद्भुक्तं द्विजैरन्नं तत्तदादाय विस्तरः॥
स्थालीपाकतिलोपेतं दक्षिणाभिमुखस्ततः।
अवनिज्यतिजान् दर्भान् पिण्डार्थं मवनीतले॥

तस्मिंश्च निर्वपेत्पिण्डान् गोत्रनामकपूर्वकान्।
एकैकलोकं पितृलोकमायुः प्राप्ता स्तथैवं नरका नरा ये॥
अग्नौ हुतेन द्विजभोजनेन तृप्यन्ति पिण्डे भुवि ते प्रदत्तैः॥
यदन्नं लेपरूपन्तु कुशाग्रेषु च निक्षिपेत्।
प्रक्षाल्य सलिलं वारि अवनेजनवत् पुनः॥
निवृत्तानर्चयेत्पिण्डान् पुष्पगन्धानुलेपनैः।
दीपवासप्रदानेन पितॄनर्चं समाहितः॥
वासो वस्त्रदशां दद्याद्विधिवन्मन्त्रपूर्वकम्।
केचिद्वस्त्राविकं लोम केचिन्मत न तन्मिति॥
पञ्चाशद्वाधिको यस्तु दद्याल्लोम स्वमब्दुकम्।
तदवश्य प्रदेयं स्याद्विधिसम्पूर्णतायते॥
पवित्रं यदि वा दर्भं करात्तनीविनिक्षिपेत्।
प्रक्षाल्य हस्तावाचम्य प्रोक्षयाद्धिकमाचरेत॥
निर्वपन्त्यपरे पिण्डान् प्रागेव द्विजभोजनात्।
खादयेयुः प्रकुर्वीस्तान् पितॄणां तु ततत्परा॥
गतानश्चानामप्येव विप्रानाचामयेदथ।
वाक्यातीतद्विजान् स्वस्ति दद्याद्वैवाचनोदकम्॥
दक्षिणा हेम देवानां पितॄणां रजतं तथा।
श्रद्धया दत्त्वा स्वधाकारं व्याहरेत् श्राद्धकृद्द्विजः॥
तिष्ठन् पिण्डान्तिके ब्रूयाद्वाचयिष्ये स्वधामिति।
वाच्यतामिति विप्रोक्तिः प्रवदेद्गोत्रपूर्वकम्॥
स्वधोच्यतामिति ब्रूयादस्तु स्वधेति तद्वचः।
ऊर्जं वहन्ति उच्चार्य जलं पिण्डेषु सेचयेत्॥
याः काश्चिद्देवताः श्राद्धे विश्वयन्देन जल्पिताः।

प्रीयता मितिच ब्रूयात् विप्रैरुक्तमिदं जपेत् ।
दातारो नोऽभिवर्द्धन्ता वेदा सन्ततिरेवच ॥
श्रद्धा च नो मा व्यगमद् बहुदेयञ्च नोऽस्त्विति ।
न्यञ्जपिण्डार्घ्यपात्राणि कृत्वोत्तानानि सम्भवान् ॥
त्रिद्धा पिण्डेष्वतो विप्रान् पित्र्यपूर्वं विसर्जयेत् ।
वाजे वाजे इति ह्युक्त्वा श्यामावाजस्य तान् बहिः ॥
ब्रूयात्प्रदक्षिणीकृत्य तथा सम्बुध्यमित्यपि ।
पिण्डानां मध्यमं पिण्डं पितृभ्यायं समाहित ॥
प्राशयेत् पुत्रकाम्या तु भार्या तच्छ्राद्धदस्य तु ।
स्नुषा वापि सगोत्रा वा पुत्रकामा द्विजाद्यया ।
आधत्त पितरो गर्भं व्याहरेद्युहि जातय. ॥
महारोगमहष्टीतोवा तद्रोगोपशमाय च ।
अस्तु मे पितरो रोगमित्युक्त्वा प्राशयेद्धितम् ॥
अन्यानप्सु क्षुधार्ते वा क्षिपेद्दद्याद्द्विजाय वा ।
अजाय वा प्रदद्यात्तु यथाद्विप्रविसर्जनम् ॥
श्राद्धाह पितृकादेके पाकामातामहाय तु ।
एकेनैव हि गच्छन्ति भिन्नगोत्रा तथा द्विजा ॥
श्रद्दैवे चाप्यस्थाने तु यत्कार्यं सुपतिष्ठताम् ।
अभिरम्यता स्वधास्थाने विप्रोक्तिरभिरताः स्म च ॥
ऊर्ध्वन्तु प्रोष्ठपद्यास्तु प्रतिपदादिकाय या ।
पुत्रधारान्वितस्य सर्वाः दद्यादि सुहृद् वस्तुनि ॥
तेषाञ्चतुर्दशी प्रोक्ता शास्त्रेणापहता नरा ।
पितृभ्यश्च त्रयोदश्या गयाश्राद्धाधिक फलम् ॥
न तत्र पातयेत्पिण्डान् सन्तानेऽप्सु कदाचन ।

पिण्डदानेन कश्यपो वशवच वदन्ति हि ॥
मन्वादिषु स्वयोदश्यां न पिण्डान् पातयेन्नरः ।
पातयेन्मतीश्चय प्राह सत्यवतीपतिः ॥
मघायुक्तत्रयोदश्या पिण्डनिर्वपणा द्विजः ।
ससन्तानो नैव कुर्यादित्यन्ये कवयो विदुः ॥

य. संक्रान्ते भानुदिने च कुर्यात्
विशेषण मारणाक द्विजन्मा ।
पिण्डप्रदानं पितृमेच तद्वत्
ज्येष्ठे प्रयद्यो सुतोऽनजोवा ॥

युतघा पञ्चमी कर्तुस्तथैवैकादशी तिथिः ।
सर्वकामा त्वमावास्या पञ्चम्यर्थं शुभा स्मृता ॥
अन्नक्षीरघृतं क्षौद्रमैक्षवञ्चावशाकवा ।
एतैस्तु तर्पितैर्विप्रैस्तर्पिता पितरो ध्रुवाम् ॥
देशः पर्वच कालश्च हवि पात्रेच शक्तितः ।
पितृदैविकचित्तस्य योगश्चेत् पितृभादिभिः ॥
शौचञ्च पात्रशुद्धाच श्राद्धञ्च परमा यदि ।
अन्नतत्तृप्तिमिच्छाद्धे एतत् खलु नयामिये ॥
यत्र प्राणिवधं कृत्वा मांसेन तर्पयेत् पितृन् ।
सोऽविद्वायन्दन दग्ध्वा कुर्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे तथा किञ्चिद्वाल आदातुमिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥
सर्वथाश्च तथा न स्वःकर्तैवामिषमाश्रयेत् ।
ब्राह्मणाय स्वयं नाद्यात्ततः स्वादितं यदि ॥
चयान्यत्पापमृत्युना शुद्ध्यर्थं श्राद्धमुच्यते ।

कृतेन तेन येषान्तु प्रदत्तमुपतिष्ठति ॥
दन्तिशृङ्गिशरव्यालनिरग्निवन्धनैस्तथा ।
विद्युद्विषाग्निभिश्चैव विप्रैश्च स्वात्मना हताः ॥
प्राणत्यक्तातकीटाद्यैः म्लेच्छैश्चैव हतास्तथा ।
पापमृत्यव एवैते शुभगत्यर्थमुच्यते ।
नारायणबलिः कार्यो विधानन्तस्य वच्मि ते ।
ऊर्द्ध्वं षण्मासतः कुर्यादेक ऊर्द्ध्वन्तु वत्सरात् ॥
तेषां चैव व्यपोहार्थं कार्यो नारायणो बलिः ।
धौतवासाः शुचिः स्नात एकादश्यामुपोषितः ॥
शुक्लपक्षे तु सम्पूज्य विष्णुं सौरं यमन्तथा ।
नदीतीरं शुचिर्गत्वा प्रदद्याद्दश पिण्डकान् ॥
क्षौद्राज्यतिलसंयुक्तान् हविषा दक्षिणामुखः ।
अभ्यर्च्य पुष्पधूपाद्यैः पुन्नामगोत्रपूर्वकान् ॥
विष्णुध्यानमनाः कुर्यात् ततः स्नात्वाम्भसि क्षिपेत् ।
निमन्त्रयीत विप्रांश्च पञ्च सप्ताथ वा नव ॥
द्वादश्यां कृतपे स्नातान् धौतवस्त्रान् समागतान् ।
कुर्यादाराधनं कृत्वा प्रक्षालिताङ्घ्रियुग्मकान् ॥
दक्षिणाप्रवणे देशे शुचिस्तानुपवेशयेत् ।
दैवे द्वौ तु त्रयः पित्र्ये प्राङ्मुखोदङ्मुखान् द्विजान् ॥
आसनावाहनार्घ्यैश्च कुर्यात् पार्वणवद्द्विजः ।
भोजयेद्भक्ष्यभोज्यैश्च क्षीरैर्दध्याज्यपायसैः ॥
तृप्तान् कृत्वा ततो विप्रान् तर्पयेच्च यथाविधि ।
भोज्येन तिलमिश्रेण हविष्येन च तान् पुनः ॥
पञ्च पिण्डान् प्रदद्याद्वै देवरूपमनुस्मरन् ।

विष्णुब्रह्मशिवेभ्यश्च त्रीन् पिण्डांश्च यथाक्रमम् ॥
यमाय सानुगायाथ चतुर्थं पिण्डमुत्सृजेत्।
मृतं संस्मृत्य मनसा गोत्रनामकपूर्वकम् ॥
विष्णुं कृत्वा क्षिपेत पिण्डं पञ्चमञ्च ततः पुनः।
दक्षिणाभिमुखश्चैव निवेद्य पञ्च पिण्डकान् ॥
आचम्य ब्राह्मणान् पश्चात् मोक्षणादिकमाचरेत्।
हिरण्येन च वासोभिर्गोभिर्भूम्या च तान् द्विजान् ॥
प्रणम्य शिरसा पश्चाद्विनयेन प्रसादयेत्।
तिलोदकं करे दत्त्वा प्रेतं संस्मृत्य चेतसि ॥
गोत्रपूर्वं क्षिपेत्प्राणी विष्णुबुद्ध्या निवेदयन्।
बहिर्गत्वा तिलाम्भस्तु तस्माद्दद्यात्समाहितः ॥
मित्रभृत्यैर्निजैः सार्धं पश्चाद्भुञ्जीत वाग्यतः।
एवं विष्णुमते स्थित्वा यो दद्यात्पापमृत्यवे ॥
समुद्धरन्ति तं प्रेतं पराशरवचो यथा।
सर्वथा पापमृत्यूनां कार्यो नारायणो बलिः ॥
तस्मादूर्ध्वं च तेभ्योऽपि प्रदत्तमुपतिष्ठते।
एवं श्राद्धैः समस्ताभ्य सन्तर्पयति वै पितॄन् ॥
तृप्तास्तानुत्तमात्मस्य पितरस्तर्पिताः परान्।
विद्यातपोभुक्तान् पुत्रान् पूज्यत्वमथ योषितः ॥
सौभाग्यैश्वर्यतेजश्च अत्र श्रेष्ठमरोगताम्।
यत्र शुचिस्यकृत्यानि सिद्धिरेवात्मवाञ्छिताम् ॥
यशस्त्वन्दीर्घमायुश्च तथैवामृतां मतिम्।
यद्यन्यत् किञ्चिदाप्याभि पितृभ्यान्तु हिताय वै
फलेनैव स्वल्पेनापि प्राप्नुवन्ति विधेः फलम्।

उच्छिष्टस्य विसर्गार्थं विधिस्तात्कालिको हि यः॥
श्राद्धे विहित यत्प्राक् पितृगणाहितैर्पिभिः।
आदाय सर्वमुच्छिष्टमवनेजनवद्बुधः॥
तत्रैव भक्षयेद्भूमौ तिलदर्भसमन्वितम्।
नारकेषु गता ये वै अल्पमृत्युमृता मम॥
एतदाप्यायनन्तेषां चिरायैतद्ब्रवीन्मनुः।
करस्य मध्यतो देवा, करपृष्ठे तु राक्षसाः॥
पादस्यानुमानादौव तस्मात्तत्र प्रदर्शयेत्।
दर्भाश्च स्वयमानीया दक्षिणात्यर्षोद्भवाः॥
तर्पणादुज्झिता ये वै दुत्वाद्याश्च विसर्जयेत्।
न कुयद्ध्यभिलाक्रदर्भमूल कुशः स्मृतः॥
छिन्नदर्भा इति प्रोक्ता तदच कुतप. स्मृतः।
हरिता याज्ञिका दर्भा पीतकाः पाकयाज्ञिकाः।
सकृद्याः पितृदैवत्याश्छिन्ना वै वैश्वदेविका॥
दर्भमूले स्थितो ब्रह्मा दर्भमध्ये जनार्दनः।
दर्भाग्रे शङ्करस्तस्मात् दर्भाः देवत्रयान्विताः॥
यद्यन्येकादि श्राद्धे प्रतिमास तु वत्सरम्।
प्रतिसम्वत्सरं कार्यं मेकोद्दिष्टं तु सर्वदा॥
एकस्य प्रथमं श्राद्ध सर्वाणस्यात्र मासिकम्।
प्रतिसम्वत्सरञ्चैव मेयतिपुरुष स्मृतम्॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं सुते।
एकोद्दिष्टं प्रकुर्वीत पित्रोरप्यत्र पार्वणम्॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं द्विजः।
मातापित्रोः पृथक्कार्यमेकोद्दिष्टं यथार्हति॥

चतुर्दश्या तु यच्छ्राद्धं सपिण्डीकरणे कृते ।
एकोद्दिष्टविधानेन तत्कुर्याच्छस्त्रपातिते ॥
पित्रादयस्त्रयो यस्य शस्त्रघातात्स्वनुक्रमात् ।
स मृते पार्वणं कुर्यात् अष्टकानि पृथक् पृथक् ॥
सपिण्डीकरणादूर्ध्वं पितुर्यः प्रपितामह ।
स तु लेपभुगित्येव प्रलुप्तपितृपिण्डत ॥
सपिण्डीकरणादूर्ध्वं कुर्यात् पार्वणवत्सदा ।
प्रतिसम्वत्सर विद्वान् च्छागलेपोविधि स्मृत ॥
सपिण्डता तु कर्त्तव्या पितु पुत्रै पृथक् पृथक् ।
स्वाधिकारप्रवृत्तत्वादितर श्राद्धकर्तृवत ॥
यस्य सम्वत्सरादर्वाक् सपिण्डीकरण भवेत ।
प्रतिमास तस्य कुर्यात् प्रतिसम्वत्सरं तथा ॥
अर्वाक् सम्वत्सरात् वृद्धौ पूर्णे सम्वत्सरेऽपि च ।
एकपिण्डीकृतानान्तु पृथक्त्वेनोपपद्यते ॥
सपिण्डीकरणादूर्ध्वं मृतकष्याचतुर्दशीम् ।
ये सपिण्डीकृतास्तेषा पृथक्त्वे नोपपद्यते ॥
पृथक्त्वकरणे तस्य पुन कार्या सपिण्डता ।
स्त्रिय श्वश्र्वा पतिर्माता तथा सह सपिण्डयेत ॥
तदभावे पितामह्या तन्माता चापरे विदु ।
नान्यथा तु पितामह्या मातामह्यास्तथापरे ॥
उदके पिण्डदानश्च भर्त्रा सह प्रदीयते ।
अपुत्रा ये मृता केचित् स्त्रियो वा पुरुषोऽपिवा ॥
तेषामपि च देय स्यादेकोद्दिष्टं न पार्वणम् ।
अपुत्राय मृता ये च कुमारा, स स्कृता अपि ।

समानता न तेषां स्यान्न स्वधा नाभिरम्यताम् ॥
भर्त्ता सपिण्डता स्त्रीणां कार्येति कवयो विदुः ।
श्वश्रू सहापरे तस्यास्तन्माता वा परे विदुः ॥
अनपत्येषु प्रेतेषु न स्वधा नाभिरम्यताम् ।
एकोद्दिष्टेषु सर्वेषु न स्वधा नाभिरम्यताम् ॥
मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारस्य चैव हि ।
दद्यात्तु मासिकं श्राद्धं सम्वत्सरं तु नान्यथा ।
अप्रत्ययगतश्चैव कुलदेशस्ववत्स्थिता ॥
यो यथा रूपया युक्तः स तथैव हि निर्वपेत् ।
दार्ढ्यार्थं दृश्यते रूढे मानवं लिङ्गमेव च ॥
दृष्टीकृताच्च विद्वद्भिर्लोकरूढिर्गरीयसी ।
विकल्पेषु च सर्वेषु स्वयमेवैक मादितः ॥
अङ्गीकरोति यः कर्त्ता सविधिस्तस्य नेतरः ॥
वह्न्याजयते यस्तु वर्णबाह्याय नित्यशः ।
म्लेच्छाय शौण्डकायैव स विप्रो वह्नियाजकः ॥
वर्त्तते यश्च चौर्येण सुवर्णोनोपहारकः ।
स गृहीतसवर्णास्त्री स विप्रो गण उच्यते ॥
मृते भर्त्तरि या नारी रहस्यं कुरुते पतिम् ।
ते तु वै आपयेद्गर्भं सा नारी गणिका स्मृता ॥
अन्यदत्ता तु या कन्या पुनरन्याय दीयते ।
अक्षता अभिव्यभीकव्यं पुनर्भूः कीर्त्तिता हि सा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहं गच्छेत् पुनर्भूः सा द्वितीयका ॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।

सवर्णाय सपिण्डाय पुनर्भूः सा तृतीयका॥
प्राप्ते द्वादशवर्षे तु या रजो न बिभर्ति हि।
धारितस्तु तया रेतो रेतोधाः सा प्रकीर्तिता॥
भर्तुर्या व्यभिचारेण नारी चरति नित्यशः।
अस्या अपि न भोक्तव्यं सा भवेत् कामचारिणी॥
भर्तुः शासनमुल्लङ्घ्य स्वकामेन प्रवर्तते।
दीव्यन्ती च हसन्ती च सा भवेत् कामचारिणी॥
पतित्यक्ता तु या नारी स्नेहादन्यत्र गच्छति।
गेहेषु रमते नित्यं स्वैरिणीत्ता विनिर्दिशेत्॥
पतिं हित्वा तु या नारी सवर्णं त्वन्यमाश्रयेत्।
वर्तते ब्राह्मणत्वेन द्वितीया स्वैरिणी तु सा॥
मृते भर्तरि या बाला क्षुत्पिपासातुरा तु सा।
तवाह मित्युपगता तृतीया स्वैरिणी तु सा॥
देशकालमुपेक्ष्यैव गुरुभिर्या प्रदीयते।
उत्पन्नसाहसान्यस्मै चतुर्थी स्वैरिणी तु सा॥
अनुपुत्रास्तु ये जातास्ते वर्ज्या हव्यकव्ययोः।
तथैव शतदशासां वर्जनीया प्रयत्नतः॥
आक्षेपेण न कर्तव्यं प्रतिलोमविधानतः।
वर्णास्त्ववर्णाः स्यास्ते सङ्कीर्णजन्मसम्भवाः॥
मातृणाश्च पितृणाञ्च स्त्रीयानां पिण्डदाः स्मृताः।
उपपतिसुतो यस्तु यश्चैव दीधिषूपतिः॥
परपूर्वा पतिर्जाता वर्ज्याः सर्वे प्रयत्नतः।
अन्त्यपानादिजाताश्च विशेषेण च वर्णयेत्॥

इतरे तुर्यवर्णेषु तपः परममुच्यते ।
भर्तुश्चित्यां समारोहेत् या च नारी पतिव्रता ।
अहन्येकादशे प्राप्ते पृथक्पिण्डं नियोजयेत् ॥
श्रौतैश्च स्मार्त्तं मन्त्रैश्च दम्पत्या वेवं तादृतो ।
एकमृत्युगतौ चैव वक्त्रावेकत्र यौ कृतौ ॥
एकत्वं तु तयोर्यस्मात् जातमाघ्राय सानकम् ॥
एकादशाहिकं श्राद्धं एकमेव स्मृतं बुधैः ।
एकत्वमिच्छन्ति मतिप्रक्षीणा एकादशाद्येषु स्त्रियास्तु नार्थ्यः ।
ते स्वर्गमार्गे विनिहत्य कुर्युः स्त्रीसत्वदाता नरकेऽधिवासम् ॥
समानमृत्युना यस्तु मृतोभर्त्ता च योषिताम् ।
तस्याः सपिण्डता तेन पिण्डमेकं तु निर्वपेत् ॥
स्त्रीपात्रं पतिपात्रे तु सिञ्चयेदेकमेवहि ।
श्राद्धे त्रिपुरुषे लोपो न तत् प्रत्यक्ष पितृन् प्रति ॥
पत्या सह परा सुप्ता तेनैवास्याः सपिण्डता ॥
पितामह्यापि चान्यत्र स्रोतदाह पराशरः ।
अन्यमीतौ न चान्यस्य तृप्तिः कस्यापि दृश्यते ॥
एव धीमत्स्मृताऽपि तस्मान्नेकत्वमात्मने ।
एकत्वाश्रयणो धर्मो नार्द्धालब्धो भवेद्ध्रुवम् ॥
तस्याः सुरतसामर्थ्यात् पत्युः स्वर्गं इहेष्यते ।
भर्त्रा सह मृता यातु नाकलोकमभीप्सती ॥
साद्यचाद्रे पृथक् पिण्डो नैरात्मन्तु स्मृतं बुधैः ।
पतिमृत्युः स्त्रियोमृत्यो निमित्तमेव जायते ॥
निर्निमित्तो नवै मृत्युः मृत्युना चैकता भवेत् ।

भर्त्रा सह मृता भार्य्या भर्त्तारं सा समुद्धरेत्॥
तस्याः पतिव्रताधर्म्म एकत्वे तु मृतो भवेत्।
बलीयस्त्वेन धर्म्मस्य तुच्छत्वाच्च समस्तया॥
धर्म्मेण लिप्यते पाप मेकत्वे समता तयोः।
नैकत्वस्तु तयो रस्मादकृत्यं श्राद्धकर्म्मणि॥
पृथगहनि कर्त्तव्यं श्राद्धमेकादशादिकम्।
यानि श्राद्धानि कार्य्याणि तान्युक्तानि पृथक् पृथक्॥
कर्त्तव्यं यच्च तेऽप्युक्ता विशेषश्च नियोधत।
औरसाद्या मृताः पुत्रा मुनिभिर्द्वादशैव तु॥
यथाज्ञात्यनुसारेण यथाभागमनुसारतः।
श्राद्धदाः क्रमेण स्युः पूर्वाभावे परः परः॥
यस्माद्यो जायते पुत्रः स भवेत्तस्य पिण्डदः।
तस्मात्तस्मादयौहन्ते मृताः प्रेतत्वमागताः॥
तस्मादवश्यमेवं हि श्राद्धं कार्य्यं विधानतः।
शूद्रस्य दासीजः पुत्रः कामदस्तु स पिण्डदः॥
जात्या जातः सुतो मातुः पिण्डदः स्यात् सुतोऽपि च।
जनकस्य न किञ्चित् स्यादृर्थोत्कामप्रवर्त्तनात्॥
वायुभूताश्च पितरो दत्ताभिकाङ्क्षिणः सदा।
तस्मात्तेभ्यः सदा देयं तृभिर्द्धर्म्मरतैः सदा॥
ये खड्गिमांसमधुपायससर्पिरन्यै-
र्दमे च कालसंहिते च सुपालदत्तैः।
प्रीणान्ति देवमनुजान् पितृवंशजांश्च
तेषां तृषां तु पितरो वरदा भवन्ति॥

उक्तश्राद्धविधिस्त्वेष वर्णानां पितृतृप्तिकृत्।
एवं दास्यति यः श्राद्धं वरान् सर्वानवाप्स्यति ॥
इति श्रीवृहत्पाराशरीये श्राद्धनिर्णयो नाम
पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः।

अगस्त्य उवाच।

अथातः सम्प्रवक्ष्यामि शुद्धिं पाराशरोदिताम्।
सूतके चाप्यशौचे वा यथावत्तां निबोधयेत् ॥
प्रसवं सूतकं प्राहु राशौचं याव मुच्यते।
यावत्कालस्य यन्मासं तथा तावन्निगद्यते ॥
केषाञ्चिन्मेन वै मासं केषाञ्चिन्मरणान्तिकम्।
सद्यःशौचास्तथा चान्ये चान्ये चैकाहिकाः स्मृताः ॥
त्रिपद्द्व्यद्द्व्यहाभ्यां द्वयापि कोऽह पञ्चभिः।
तान्येव त्रिगुणान्याहु र्दिनान्येव मनीषिणः ॥
सद्यमार्यं निबोध त्व मुक्तक्रममिदं द्विज!।
प्रत्क्लिनो यन्मुनीनाञ्च प्राक् ब्रवीत् कलिधर्मवित् ॥
विष्णुध्यानरतानाञ्च सदैव ब्रह्मचारिणाम्।
गृहमेधिद्विजानान्तु तथैव व्रतचारिणाम् ॥
वेदतत्त्वार्थवेत्तॄणां नित्यस्नानकृतां तथा।
अन्तःसंसर्गिणामेषा नाशौचं नापि सूतकम् ॥
संसर्गं वर्जयेद्यत्नात् संसर्गो दोषकारणम्।

वदन्ति मुनयः सर्वे वर्जने स्यान्न किल्बिषी ॥
वदन्ति मुनयः सर्वे संसर्गो दोषकारणम् ।
असंसर्गः स्वकर्मस्थो द्विजो दोषैर्न लिप्यते ॥
दानोद्वाहोत्सवग्रामे देशविप्लवकादिके ।
सद्यः शौचं द्विजातीनां सूतकाशौचयोरपि ॥
दातॄणां वृत्तिनामेके कवयः सत्त्रिणामपि ।
सद्यः शौचमदोषाणां मूचुर्धर्मविदः कलौ ॥
सर्वमन्त्रपवित्रस्तु अग्निहोत्री षडङ्गवित् ।
राजा च श्रोत्रियश्चैव सद्यःशौचः प्रकीर्तितः ॥
देशान्तरगते ताते मृते वापि सगोत्रिणि ।
शेषाहानि दशाहार्वाक् सद्यः शौचमतः परम् ॥
पिण्डनिर्वर्तने जाते मृते वापि सगोत्रजे ।
सद्योऽप्यहेति मासे स्यात् सद्यः शौचं विशोधनम् ॥
सद्यः शौचं विधातव्यं सर्वाश्च दशजन्मनः ।
बान्धवादिषु विज्ञेय मन्यदूर्द्ध्वं विधीयते ॥
नाशौचसूतके स्नातां नृपतीनां कदाचन ।
यज्ञकर्मनिरक्तस्य ऋत्विजो दीक्षितस्य च ॥
पृथक् पिण्डमृते काले विदेशेऽप्यत्र च श्रुतेः ।
जाते वापि च शुद्धिः स्यात् सद्यः शौचादसंशयम् ॥
सपेटः साग्निको दानात् ब्राह्मणः शुद्धिमाप्नुयात् ।
तथैकाहे नृपे भंस्ये तथैव ब्रह्मचारिणि ॥
दुर्भिक्षे राष्ट्रभङ्गे च आपत्कालमुपस्थिते ।
उपसर्गाद्यतेऽपि सद्यः शौचं विधीयते ॥
गोविप्रार्थविपन्नानां चाहवेषु तथैव च ।

ते योगिभिःसमाख्येयाः सद्यः शौचं विधीयते ॥
विप्रे सख्ये वताद्दर्वाक् श्रोत्रिये च तथा द्विजेः ।
अनूचाने गुरौ चैव आचार्य्ये कापि संस्थिते ॥
असस्कृतस्त्रिया रात्रि श्रोत्रिये द्विधनङ्गते ।
त्रिरात्रमेव शौच स्यात्तथैवोदकदायिनः ॥
विधानेनाग्निको विप्र त्रिरात्राच्छुद्धिमाप्नुयात् ।
मनीषिणा. परे त्र्यह रसपिण्डे त्र्यहं स्मृतं ॥
प्रेतभूतस्य यः शूद्रं ब्राह्मणज्ञानदुर्बलः ।
नियत ह्यनुगच्छेत त्रिरात्रमशुचि भवेत् ॥
षड्रात्रं नवरात्रञ्च यवस्त्र्यां विशुद्धकृत् ।
त्र्यहश्चैव विशुद्धर्थं धर्मशास्त्रविदो विदुः ॥
अनाथं ब्राह्मणं प्रेत ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफल मनुपूर्व लभन्ति च ॥
अशुचित्व न तेषान्तु पाप वाशुभकारणम् ।
जलावगाहनं तेषां सद्यः शौच विधीयते ॥
असगोत्रम सम्बन्ध प्रेतीभूत तथा द्विजम् ।
उद्धृत्यद्विजाः सर्वे स्नानान्ते शुचयः स्मृताः ॥
एकरात्रं वहन्येके सद्यः स्नाने तथा परे ।
गोग्रहादिष्वनाथाञ्च मुनयः शुचिकारणम् ॥
पतन्य यो विपरीत गतुभिर्यत्र कुत्रचित् ।
स मृतो यतिवत्सद्यः प्रविशेत्तद्दर्वेषसि ॥
सन्न्यासी युद्धसंस्थश्च सम्मुखं शत्रुभिर्नरः ।
सूर्य्यमण्डलमेतावावित्ति प्राहुर्मनीषिणः ॥
पराङ्मुखे हते सैन्ये यो युद्धाय निवर्त्तते ।

तत्पदानीष्टतुल्यानि स्मृत्वा चाह पराशरः ॥
वक्त्रे तु प्रविशेद्यस्य लोहितं शिरसः पतत् ।
सोमपानेन ते तुल्या बिन्दवो रुधिरस्य च ॥
सन्यासेन मृता ये वै प्रधने ये तनुत्यजः ।
मुक्तिभाजनकास्ते ते इति वेदो निदर्शनम् ॥
सद्यः शौचं विधातव्यं शुचिरेवं विधीयते ।
नोच्यन्ते ते मृता लोके सद्यो ब्रह्मवपुर्गमाः ॥
सन्ध्याचारविहीनाना सूतके ब्राह्मणा ध्रुवम् ।
अशौचं वा दशाहं स्यादिति प्राह पराशरः ॥
राज्ञस्तु द्वादशाहं स्यात् पक्षो वैश्यस्य पावनः ।
वृषभस्य तथा मास मरणादपि धर्मतः ॥
क्षत्रियादि पक्षः सद्भिर्मातुलादिषु कीर्तितः ।
गर्भस्रावे तु तैर्मासैः रात्रयो माससम्मिताः ॥
स्रावद्गर्भस्य विद्वांसो मासादर्वाक् चतुर्थकम् ।
पाताद्गर्भं वदन्त्येके तत्राधिक्यं च सूतकम् ॥
कृष्णव्यसनयोगार्तपराधीनञ्च दुर्व्यकम् ।
दशायन्तो निराचाराः पितृमातृविवर्जिताः ॥
स्त्रीजिताश्चानपत्याश्च देवब्राह्मणवर्जिताः ।
परद्रव्य जिष्टचन्तः सद्यः सूतकिनः सदा ।
पूर्वे कि मत्यशुद्धेया चान्यदापद्यते यदि ॥
पूर्वेणैव तु शुध्येत यानै जातं मृते मृतम् ।
एकपिण्डाः स्वदायादाः पृथक् दारनिकेतना ॥
जन्मनि मरणे चापि भवेत्तेषान्तु सूतकम् ।
धर्मोधशुभपातेषु देशान्तरगतेऽपि वा ॥

बाले प्रेते च संन्यस्ते सद्यः शौचं विधीयते ।
अजातदन्ता ये बाला येच गर्भाद्विनिःसृताः ॥
न तेषामग्निसंस्कारो नाशौच-नोदकक्रिया ।
विवाहोत्सवयज्ञेषु त्वन्तराशौचसूतके ॥
पूर्वसङ्कल्पितानर्थान् तानशौच्यान् ब्रवीन्मनुः ।
शिल्पिनः कारकाश्चैव दासीदासास्तथैव च ॥
इत्यादीनां न ते स्नातामनुगच्छन्ति या द्विजः ।
पिता पुत्रेण जातेन दद्यात् आद्यन्तयोदितम् ।
पितृणा विधिवद्दान तत्र तत्राप्यनन्तकम् ॥
प्रसवे च द्विजातीनां न कुर्यात्सङ्करं यदि ।
दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः ॥
अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात् ।
उद्बध्य म्रियते यस्तु न तस्याग्निं प्रदीयते ॥
न स्नायान्नोदकं दद्यान्नापि कुर्याद्विशौचताम् ।
सर्पेण शृङ्गिणा वापि जलेन चाग्निना तथा ॥
न स्नानादौ विपन्नस्य तथा चैवात्मघातिनः ।
अर्वाक् द्विहायनादग्निं न दद्यान्मृतकस्य च ॥
किन्तु तान्निखनेद्भूमौ कुर्यान्नैवोदकक्रियाम् ।
सर्पादिप्राप्तमृत्यूनामग्निदाहादिकाक्रियाः ॥
षण्मासेतु गते कार्या इति प्राह-पराशरः ।
प्राक्[illegible] बुधैः कार्यमब्द[illegible]दिकम् ॥
तत्कृत्वाप्युक्तदिवसैः शुद्धमर्हति धर्मतः ।
अन्यायमृतविप्राणां ये वोढारो भवन्ति हि ॥
अग्निदाश्चैव ये तेषां तथोदकादिदायिनः ।

उद्बन्धनमृतस्यापि यश्छिन्द्यात् रज्जुपाशकम् ॥
ते सर्वे दासयुक्ता प्रायश्चित्तस्य भाजनाः ।

यः सूतकाशौचविशुद्धकृत् स्यात्
श्वास्य च कालन्तमनुक्रमेण ।
पाराशरस्याव्यं विनिश्चिताया
वाच्यास्ततो निष्कृतयो द्विजास्ताः ॥

सूतकाशौचयो रुक्ताः शुद्धिरन्याऽनुपूर्वश ।
सर्वेनसा विशुद्ध्यर्थं प्रायश्चित्तमथाब्रवीत् ॥
मनुर्वा याज्ञवल्क्यस्तु वशिष्ठ प्राह निष्कृतिम् ।
सा क्षतादिषु वर्णानां सति धर्मे वदुष्यति ॥
मानसा वाचिका दोषास्तथा वै कार्य्यकारिताः ।
धर्माधीना वृथा सर्वे जायन्ते तेऽप्यनिच्छताम् ॥
तेषामुपरताद्याणां प्रेत्येह शुभमिच्छताम् ।
शक्तिजो निष्कृतिं प्राह युगधर्मानुरूपतः ॥
निष्कृतिं व्यवहाराणां सर्वं निष्कृतिकृद्यतः ।
क्रतिं विप्रैः कथ रूपैरिति वाच्या भवेद्धि सा ॥
तद्रूपञ्च प्रवक्ष्यामि यावद्भिः सा द्विजैर्भवेत् ।
यथाविधाय विप्रा स्युरिति विद्वन् ! प्रकीर्त्यते ॥
पर्षद्गवरा प्रोक्ता शास्त्रज्ञैर्वेदवित्तमैः ।
तं य ब्रूयुः स धर्मः स्यात् स्वयम्भूरित्यकल्पयत् ॥
देवशास्त्रविदो विप्रा य ब्रूयुः सप्त पञ्च वा ।
त्रयो वापि स धर्मः स्यादेको वाध्यात्मवित्तमः ॥
शयम नियमं वापि उपवासादिकञ्च यत् ॥

न लक्षणे तु मूर्खाणां नचैवाधर्मवादिनाम् ॥
अविदुषां नातिलुब्धानां नचापि पक्षपातिनाम् ।
श्रुताध्ययनसम्पन्नः सत्यवादी जितेन्द्रियः ॥
सदा धर्मरतः शान्तः सदापर्षत्वमर्हति ।
न सा वृद्धैर्न तरुणैः न सुरूपैर्धनान्वितैः ॥
त्रिभिरेकेन पर्षत् स्याद्विद्वद्भिर्विदुषापि च ।
तनया वयसापि स्युर्वृद्धधर्मविदो द्विजाः ॥
शिशवोऽपि हि मध्यस्थाः सर्वत्र समदर्शिनः ।
न सा विप्रैर्भवेद्वृद्धैर्वृद्धा स्युर्धर्मवादिनः ॥
यत्र सत्यं स धर्मः स्यात् स्वर्गं यत्र न तादृशम् ।

न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मो वृथा यत्र न सत्यमस्ति
सत्यं न तद्यच्छलहृदानुविद्धम् ॥

निष्कृतौ व्यवहारे च वृद्धस्यार्थसनेऽपि च ।
धर्मं वा यदिवाऽधर्मं पर्षं यत्प्राह तद्भवेत् ॥
स्त्रीणाञ्च बालवृद्धानां क्षीणानां कुमारीरिणाम् ।
उपवासाद्यशक्तानां कर्त्तव्योऽनुग्रहश्च तैः ॥
ज्ञात्वा देशञ्च कालञ्च वयः सामर्थ्यमेव च ।
कर्त्तव्योऽनुग्रहः सद्भिर्मुनिभिः परिकीर्त्तितः ॥
लोभान्मोहाद्भयान्मैत्र्याद्यदि कुर्युरनुग्रहम् ।
नरकं यान्ति ते मूढा शतधा वाग्रवाचिनः ॥
प्रविश्य चोत्तमान्ते वै पर्षदानुग्रहात्स्थितः ।
यथाकाल प्रकुर्युस्ते प्रायश्चित्तन्तदीरितम् ॥

किन्त्वयं याचते देवः वदन्तोऽत्र द्विजातयः ।
सर्वे कुर्वन्ति नियतं गतपापं न संशयः ॥
प्रसादो त्रिविधो दैव्यो दैत्याश्चासुरश्चैव च ।
क्रीडयापि च तत्रैव देयास्तथैव ते द्विजाः ॥
व्यवहारो गोमयैस्तु भूर्याह्वापि च वै रतः ।
तयास्ततन्तु तत्पापन्तत्तथैव निवेदयेत् ॥
यस्तेषामन्यतो ब्रूयात् स पापीयान्पतत्यधः ।
सत्यमसत्य मेवात्र विपर्यस्तं वदेदिति ॥
स एवानृतवादी स्यात् सोऽनन्तनरकं व्रजेत् ।
ज्योतिष व्यवहारश्च प्रायश्चित्तं चिकित्सितम् ॥
अज्ञानन्धी नरो ब्रूयात् साहस किमतः परम् ।
व्यवहारश्च ते, प्रोक्तो मन्वाद्यै धर्मवत् क्षमि: ॥
प्रजाभिर्न तु सर्वाभिर्नान्यैश्चतुर्भिर्मानवैः ।
तत् साधकप्रमाणानि व्याख्यितानि न तैर्विना ॥
जलादिनीचदिव्यानि साक्ष्योक्त्या शपथानि च ।
अन्ये जनपदाचारा यथाधर्म स्तथापरः ॥
पर्षद्भि र्ब्राह्मणैर्मत्वा निर्णेतव्यो यथाविधिः ।
यत्र जात्यनुसारेण देशकालानुधर्मतः ॥
कर्त्तव्यः सत्तमैः सर्व माननीयोऽभिवादिभिः ।
गोब्राह्मणहतानाञ्च ये स्युर्दाहादिकारिणः ॥
तत्तत्कृच्छ्रेण शुद्ध्येयुरिति पाराशरोऽब्रवीत् ।
भोजयेद्ब्राह्मणान् पश्चात् स दद्या गोश्च दक्षिणाम् ॥
जायते पापनिर्मुक्तः शक्तिसूनो यथा वचः ।
अनाग्निका निवृत्ता ये ब्रह्मचर्यात्तथा द्विजाः ॥

वैकालिकास्तु विज्ञेयाः सर्वकार्य्यविवर्जिताः।
सर्वे प्रविषयेयु वैते च वैडालिकैः समाः॥
तेषां सर्वाण्यपत्यानि पुरुषैः सह घातयेत्।
ब्रह्मघ्नश्च सुरापश्च स्तेयी गुर्व्वङ्गनागमः॥
एतेषां निष्कृतीं ब्रूयादेतत् संसर्गिणा मपि।
द्वादशाब्दन्तु विचरेद्ब्रह्मघ्नस्तत्कपालधृक्॥
सर्वत्र ख्यापयन् कर्मभिक्षा विप्रेषु सञ्चरन्।
दृष्ट्वा सेतुं समुद्रस्य स्नात्वा तु लवणाम्भसि॥
ब्राह्मणेषु चरन् भिक्षा स्वकर्म ख्यापयन् शुचिः।
मुण्डितस्तु द्विशाखश्च स कौपीनो निराश्रयः॥
चीरचीवरवासा वै त्रि. स्नायी सन् शुचिव्रती।
सयताश्चरेच्छान्त न्कृतोपानहवर्जितः॥
ब्रह्मघ्नोऽस्मीत्यहं वाच मिति सर्वत्र वै वदेत्।
गवाञ्च विंशतिर्दद्याद्दक्षिणां स्वयसुताम्॥
ब्राह्मणेभ्यो निवेद्यैता. शुचिरास्थाय भूपतेः।
पूर्वोक्तप्रत्यवायाना प्रायश्चित्त मिदं स्मृतम्॥
ब्राह्मणाना प्रसादेन तीर्थेषु गमनेन च।
गोव्रतस्य प्रदानेन शुध्यन्ति नात्र संशय.।
अवभृत्येव मेधस्य स्नात्वा शुद्धि मवाप्नुयात्॥
आख्याय नृपतेर्वापि तेन संशोधितः शुचिः।
महापापानि सर्वाणि कथयित्वा महीपतेः॥
निष्कृतिं तद्गिरा दद्या दन्यथा तेऽपि तत्समाः।
रोगार्त्तांश्च द्विज वापि मार्गे खेदसमन्वितम्॥
दृष्ट्वा कृत्वा निरातङ्कं ब्रह्मघ्नः शुद्धिमाप्नुयात्।

अर्धख्यातं धनं दत्त्वा विप्रेभ्यो वापि शुद्ध्यति ॥
अरण्ये निर्जने यद्वा शुद्ध्येत् त्रिवेदसंहिताम् ।
सुरापस्य प्रवक्ष्यामि निष्कृतिं श्रोतु मर्हसि ॥
सुरापस्तु सुराप्तप्तां पयो वा जलमेव वा ।
तप्तं गोमूत्रमाज्यं वा पीत्वा मृतोऽपि शुद्ध्यति ॥
यद्वि वा चैलवासो वा ब्रह्महत्याव्रतञ्चरेत् ।
यद्यज्ञानात्पिबेद्विप्रो द्विजातिर्वा सुरां पुनः ॥
पुनः संस्कारकरणात् शुद्ध्येदाह पराशरः ।
स्तेयं कृत्वा सुवर्णस्य शुद्धमेव द्विजातयः ॥
समर्प्य मूषलं राज्ञः ख्यापये स्तेय कर्मकृत् ।
शक्तिश्चोभयतस्तीक्ष्णा मायसं दण्डमेव च ॥
खादिरं लगुडं वापि हन्यादेकेन तं नृपः ।
जीवतोऽपि भवेत् शुद्धो मुक्तो वा तेन पावनः ॥
मृतश्च मेत्य संशुद्ध्येत् पाराशरवचो यथा ।
न स्त्री मतिक्रमं कृत्वा अग्निवर्णां च तां धमेत् ॥
गुर्वङ्गना गमनस्त्वा लोहमय्यां तु स्वापयेत् ।
वृषणौ पुनरुत्कृत्य नैऋत्यामुत्सृजेत्तनुम् ॥
स मृतः शुद्धिमाप्नोति नान्यस्तस्य तु निष्कृतिः ।
मब्दत्रयं चरेत् कृच्छ्रं प्राजापत्य मथापि वा ॥
चान्द्रायणं चरेद्वापि त्रीन् मासानि जितेन्द्रियः ।
व्रतं तु क्रियमाणे वै विपत्तिः स्यात् कथञ्चन ॥
स मृतोऽपि भवेच्छुद्ध इति धर्मविनिर्णयः ।
अनिर्दिष्टस्य पापस्य तथोपपातकस्य च ॥
तच्छुद्धौ पावनं कुर्यात् चन्द्रव्रत समाहितः ॥

तिष्ठेन्मासं पयोऽशित्वा पराकं वा चरेद्व्रतम् ।
अनिर्दिष्टस्य पापस्य शुद्धिरेषा प्रकीर्तिता ॥
क्षत्रियं ब्राह्मणं हत्वा गवां दद्यात् सहस्रकम् ।
वृषभैकेन संयुक्तां पापात्तस्मात् प्रमुच्यते ।
त्रीणि वर्षाणि शुद्ध्यर्थं ब्रह्मघ्नस्य व्रतं चरेत् ॥
चान्द्रायणानि वा त्रीणि कृच्छ्राणि त्रीणि वा चरेत् ।
वैश्यं हत्वा द्विजश्चैव अब्दमेकं व्रतञ्चरेत् ॥
गवां चैकशतं दद्याच्चरेच्चान्द्रायणानि च ।
कृच्छ्राणि वाचरेत् त्रीणि वचनाद्विदुषा मुनी ॥
दुष्टकारप्रदुष्टा स्त्री चातुर्वर्ण्या द्विजातयः ।
शूद्रहत्याव्रतं ते तु चरन्तः शुद्धिमाप्नुयुः ॥
अनुलोमेन शूद्रं वा योषामव्यभिचारिणीम् ।
शुद्धिमिच्छन्ति कवयश्चान्द्रव्रतेन केचन ॥
व्यभिचारात्तु तां हत्वा योषितो ब्राह्मणादयः ।
दृतिधनुर्वस्तं गवां क्रमाद्दद्युर्विशुद्धये ॥
साध्वीनामसाध्वीनाञ्च नरो हत्वा सहस्रकम् ।
चीर्णेन शुद्धिमागच्छेत् योषा सत्या व्रतेन तु ॥
गोघ्नस्यातः प्रवक्ष्यामि निष्कृतिं श्रोतुमर्हथ ।
यथा यथा विपत्तिः स्यात् तथा तथोपपद्यते ॥
गोघातो पञ्चगव्याशी गोष्ठशायी च गोऽनुगः ।
सम्यक् मासमासीन गोप्रदानेन शुध्यति ॥
एकपादे तु लोमानि द्वये श्मश्रु निकृन्तयेत् ।
पादत्रये शिखावर्जं सशिखं तु निपातिते ॥
सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम् ।

असंख्यातं धनं दत्त्वा विप्रेभ्यो वापि शुद्धति ॥
अरण्ये निर्जने यद्वा शुद्धोत् त्रिर्वेदसंहिताम् ।
सुरापस्य प्रवक्ष्यामि निष्कृतिं श्रोतु मर्हसि ॥
सुरापस्तु सुरान्तप्तां पयो वा जलमेव वा ।
तप्तं गोमूत्रमाज्यं वा पीत्वा मृतोऽपि शुद्धति ॥
यद्वि-या चैलवासो वा ब्रह्महत्याव्रतञ्चरेत् ।
यद्यज्ञानात्पिबेद्विप्रो द्विजातिर्वा सुरां पुनः ॥
पुनः संस्कारकरणात् शुद्धोदाह पराशरः ।
स्तेय कृत्वा सुवर्णस्य शुद्धमेव द्विजातयः ॥
समर्प्य मूषलं राज्ञः ख्यापयेे स्तेय कर्मकृत् ।
शक्तिञ्चोभयतस्तीक्ष्ण मायसं दण्डमेव च ॥
खादिरं लगुड़ं वापि हन्यादेकेन तं नृपः ।
जीवतोऽपि भवेत् शुद्धो मुक्तो वा तेन पावनः ॥
मृतश्च प्रेत्य संशुद्धोत् पाराशरवचो यथा ।
न स्त्री प्रतिकृतं कृत्वा अग्निवर्णां च तां धमेत् ॥
गुर्वङ्गना गमन्तस्या लोहमय्यां तु स्थापयेत् ।
वृषणो पुनरुत्कृत्य नैऋत्यामुत्सृजेत्ततः ॥
स मृतः शुद्धिमाप्नोति नान्यस्तस्य तु निष्कृतिः ।
सम्वत्सरं चरेत् कृच्छं प्राजापत्य मथापि वा ॥
चान्द्रायणं चरेद्वापि त्रीन् मासानि जितेन्द्रियः ।
व्रतं तु क्रियमाणे वै विपत्तिः स्यात् कथञ्चन ॥
स मृतोऽपि भवेच्छुद्ध इति धर्मविनिर्णयः ।
अनिर्दिष्टस्य पापस्य तथोपपातकस्य च ॥
तच्छुद्धौ पावनं कुर्यात् चन्द्रव्रत समाहितः ॥

तिष्ठेन्मासं पयोऽशित्वा पराकं वा चरेद्व्रतम् ।
अनिर्दिष्टस्य पापस्य शुद्धिरेषा प्रकीर्तिता ॥
क्षत्रियं ब्राह्मणं हत्वा गवां दद्यात् सहस्रकम् ।
वृषभैकेन संयुक्तं पापादस्मात् प्रमुच्यते ।
त्रीणि वर्षाणि शुद्ध्यर्थं ब्रह्मघ्नस्य व्रतं चरेत् ॥
चान्द्रायणानि वा त्रीणि कृच्छ्राणि त्रीणि वा चरेत् ।
वैश्यं हत्वा द्विजश्चैव अब्दमेकं व्रतञ्चरेत् ॥
गवां त्र्येकशतं दद्याच्चरेच्चान्द्रायणानि च ।
कृच्छ्राणि वाचरेत् त्रीणि वचनाद्विदुषां मते ॥
द्वन्द्व कार प्रदुष्टा स्त्री चातुर्वर्ण्या द्विजातयः ।
शूद्रहत्या व्रतं तेषु चरन्तं [illegible] द्विमासिकं ॥
अनुलोमेन शूद्रं वा योषामव्यभिचारिणीम् ।
शुद्धिं मिच्छन्ति कवयश्चान्द्रव्रतेन केचन ॥
व्यभिचारात्तु तं हत्वा योषितो ब्राह्मणादयः ।
दक्षिधनुर्वस्त्र गवां क्रमाद्दद्युर्विशुद्धये ॥
वास्थीना मनस्थीनाञ्च नरो हत्वा सहस्रकम् ।
चीर्णेन शुद्धिमाप्नोति योषां मत्वा व्रतेन तु ॥
गोघ्नस्यातः प्रवक्ष्यामि निष्कृतिं शृणुत मर्त्त्याः ।
यथा यथा विपत्तिः स्यात् तथा तथोपपद्यते ॥
गोघाती पञ्चगव्याशी गोष्ठशायी च गोऽनुगः ।
मनु ज्ञो मासमासीन गोप्रदानेन शुध्यति ॥
एकपादे तु लोमानि द्वये श्मश्रु निकृन्तयेत् ।
पादत्रये शिखावर्जं सशिखं तु निपातिते ॥
सशिखं वपनं कृत्वा त्रिसन्ध्य मवगाहनम् ।

असंख्यात घन दत्त्वा विप्रेभ्यो वापि शुद्ध्यति ॥
अरण्ये निर्जने यद्वा शुद्ध्येत् विवेदसहिताम् ।
सुरापस्य प्रवक्ष्यामि निष्कृति श्रोतु मर्हसि ॥
सुरापस्तु सुराप्तप्ता पयो वा जलमेव वा ।
तप्त गोमूत्रमाज्य वा पीत्वा मृतोऽपि शुद्ध्यति ॥
यदि वा चैलवासो वा ब्रह्महत्याव्रतञ्चरेत् ।
यद्यज्ञानात्पिबेद्विप्रो द्विजातिर्वा सुरा पुन ॥
पुन. संस्कारकरणात् शुद्ध्येदाह पराशर. ।
स्तेय कृत्वा सुवर्णस्य शूद्रमेव द्विजातय ॥
समर्प्य मूषल राज्ञ ख्यापये स्तेय कर्मकृत् ।
शक्तिश्चोभयतस्तीक्ष्ण मायसं दण्डमेव च ॥
खादिर लगुड वापि हन्यादेकेन त नृप ।
जीवतोऽपि भवेत शुद्धो मुक्तो वा तेन पावन ॥
मृतश्च प्रेत्य संशुद्ध्येत् पाराशरवचो यथा ।
न स्त्री मतिकृतं कृत्वा अग्निवर्णा च ता धमेत् ॥
गुर्वङ्गना गमन्तस्या लोहमय्या तु स्थापयेत् ।
वृषणौ पुनरुत्कृत्य नैऋत्यामुत्सृजेत्तनुम् ॥
स मृत शुद्धिमाप्नोति नान्यस्तस्य तु निष्कृति ।
सम्वत्सरं चरेत् कृच्छ्र प्राजापत्य मथापि वा ॥
चान्द्रायण चरेद्वापि त्रीन् मासानि जितेन्द्रिय ।
व्रत तु क्रियमाणो वै विपत्ति स्यात् कथञ्चन ॥
स मृतोऽपि भवेच्छुद्ध इति धर्मविनिर्णय. ।
अनिर्दिष्टस्य पापस्य तथोपपातकस्य च ॥
तच्छुद्धौ पावन कुर्यात् चन्द्रव्रत समाहित ॥

तिष्ठेन्मासं पयोऽशित्वा पराकं वा चरेद्व्रतम् ।
अनिर्दिष्टस्य पापस्य शुद्धिरेषा प्रकीर्तिता ॥
क्षत्रियं ब्राह्मणं हत्वा गवा दद्यात् सहस्रकम् ।
वृषभैकेन संयुक्तां पापात्तस्मात् प्रमुच्यते ।
त्रीणि वर्षाणि शुद्ध्यर्थं ब्रह्मघ्नस्य व्रतं चरेत् ॥
चान्द्रायणानि वा त्रीणि कृच्छ्राणि त्रीणि वा चरेत् ।
वैश्यं हत्वा द्विजश्चैव अब्दमेकं व्रतञ्चरेत् ॥
गवां चैकशतं दद्याच्चरेच्चान्द्रायणानि च ।
कृच्छ्राणि वाचरेत् त्रीणि वचनाद्विदुषां मुने ॥
इह चार प्रदुष्टा स्त्री चातुर्वर्ण्यो द्विजातयः ।
शूद्रहत्या व्रतं तेतु चरन्तः शुद्धिमाप्नुयुः ॥
अनुलोमेन शूद्रं वा योषामव्यभिचारिणीम् ।
शुद्धिमिच्छन्ति कवचचन्द्रव्रतेन केचन ॥
व्यभिचारात्तु ते हत्वा योषितो ब्राह्मणादयः ।
दत्त्वा धनुर्वस्त्रं गवा क्रमाद्दद्युर्विशुद्धये ॥
साध्वीनां मनस्वीनाञ्च नरो दत्वा सहस्रकम् ।
चीर्णेन शुद्धिमागच्छेत योषा सत्या व्रतेन तु ॥
गोघ्नयात प्रवक्ष्यामि निष्कृतिं शृणु सर्वथ ।
यथा यथा विपत्तिः स्यात् तथा तथोपपद्यते ॥
गोघातो पञ्चगव्याशी गोष्ठशायीच गोऽनुग ।
मयुक्तो मासमासीन गोप्रदानेन शुद्ध्यति ॥
एकपादे तु लोमानि हये श्मश्रु निकृन्तयेत् ।
पादत्रये शिखावर्जं सशिखं तु निपातिते ॥
सशिख वपन कृत्वा त्रिसन्ध्य अवगाहनम् ।

गवां मध्ये वसेद्रात्रौ दिवा गा समनुव्रजेत ॥
तिष्ठन्तीभिश्च तिष्ठेत व्रजन्तीभि सह व्रजेत्।
पिवन्तीभिः पिवेत्तोयं संविशन्तीभिश्च संविशेत् ॥
शृङ्गकर्णादिसंयुक्तं चर्मोत् कृत्यं तदाव्रतः।
विपेक सुचरेत्क्लिष्ठ स्वकर्म ख्यापयन् व्रती ॥
गोघ्नस्य देहि मे भिक्षां इति वाचमुदीरयेत्।
मासमेक व्रतं कृत्वा गोप्रदानेन शुद्ध्यति ॥
चौरव्याघ्रादिकेभ्यश्च सर्वप्रायैः समुद्धरेत्।
गर्त्तप्रपातपङ्काद्य तथान्यादुपकारत ॥
भोजयेद्ब्राह्मणान् पश्चात् पुष्पधूपादिपूर्वकम् ॥
दद्याद्गाश्च'च पञ्चैक ततः शुद्ध्यति किल्बिषात्।
मुनय केचिदिच्छन्ति विचित्रासु विपत्तिषु ॥
यथा सम्भवतस्तासु पृथक्पृथग्विनिष्कृतिम्।
प्रेक्षवस्त्राश्मकृत्तिदण्डयष्टिमुष्टिप्रघातनम् ॥
योक्त्रयन्त्रारणं रोधो बन्धनं विद्यदग्नय।
गर्त्तपङ्कप्रपातश्च व्रतव्याघ्रादिभयात्मम् ॥
मुकृद्रोगचिकित्सा च तथादिदोहवाहने।
मृत्युस्थानानि चैतानि गवामिति प्रबोधनम् ॥
प्रब्रूयात् पृथगेतेषु प्रायश्चित्तं पराशरः।
उपेक्षयाश्च पङ्कादौ तथोपविषयश्चर्यौ, ॥
वक्ष्यमाणक्रमेणैतत् शृणुध्वन्द्विजसत्तमाः!।
शस्त्रेण वीथि कृच्छाणि तदर्द्धं वासमाचरेत् ॥
अश्मना द्वे चरेत् कृच्छ्रे मृत्पिण्डे नास्ति कृच्छ्रकम्।
यष्ट्या च द्वे चरेत् कृच्छ्रे साक्षात् यष्ट्या तु ते चरेत् ॥

योक्त्रे वा पादमेकन्तु तारणे पादमेव च ।
रोधने कृच्छ्रपादे द्वे कृच्छ्रमेकं तु बन्धने ॥
कूपपाते चरेत् कृच्छ्रमर्द्धं वाप्यां समाचरेत् ।
गोप्रकृत्यभिघाते च प्राजापत्यञ्चरेद्द्विजः ॥
क्षुत्तृट् रोगचिकित्सासु कृच्छ्रेण प्रेक्षणं चरेत् ।
पतिता पङ्कलग्ना वा अवलिप्ताश्च यो नरः ॥
स्वस्य चान्यस्य चोत्प्रेक्ष्य सार्द्धकृच्छ्रं चरेच्छुचिः ।
एकाचेद्बहुभिर्विद्वान् चोदिताचेन्नयेत गौः ॥
पादं पादञ्चरेयुस्ते इति पाराशरोऽब्रवीत् ।
स्वबुधा योऽवलिप्ताङ्गीं पश्यन्तो नोपकुर्वते ॥
पातनोत्प्रेक्षणप्रोक्तञ्चरेयुस्ते व्रतं नरः ।
या गर्त्तादौ विपद्येत चोदिता स प्रपत्य वा ॥
पातचोदितयोरुक्तं तत्कर्त्ता व्रतमाचरेत् ।
अन्यथा रज्जुदोषेण गौर्विपद्येत यस्य सः ॥
व्रतपादञ्चरेत् शुध्येत्किञ्चिद्दद्याच्च दक्षिणाम् ।
यो गामपालयन् दुह्या दतिवा वाहयेद्धयम् ॥
यदि म्रियेत तद्दोषात्तदा कृच्छ्रार्द्धमाचरेत् ।
ग्रास यो ना क्षुधार्त्तस्य तृषार्त्तस्य न वा जलम् ॥
स्त्रीसुतस्य नरो दद्यात्स तत्पादव्रतञ्चरेत् ।
या तु यद्वा चिकित्सार्थं विशल्यकरणाय च ॥
औषधादिप्रदानाय विपन्ना नास्ति पातकम् ।
विद्युत्पाताग्निदाहाभ्यां कुड्याद्य पतनादिभिः ॥
गोभिर्विपत्तिमापन्ने तत्र दोषो विपद्यते ।
पालस्य रक्षतोऽरक्ष्ये व्याघ्रादिर्गां निपातयेत् ॥

अकुर्वतः प्रतीकारं कृच्छ्रार्धं तस्य पावनम् ।
त्यजन् शून्येषु पालेषु तथान्यारण्यगामिषु ॥
पाले सम्भाषयत्युच्चैरुन्मत्तात्तत्र न दोषभाक् ।
गर्भिणीगर्भतुल्यात्तु तद्गर्भं न विशत्यतः ॥
यत्नतोऽपि विपद्येत तत्‌ दोषो न विद्यते ।
गर्भस्य पातने पादं द्वौ पादौ गात्रसम्भवे ॥
पादोनं व्रतमाचष्टे हत्वा गर्भमचेतनम् ।
अङ्गप्रत्यङ्गभूतेन तद्गर्भे चेतनान्विते ॥
द्विगुणङ्गोव्रतं कुर्य्यादेषा गोघ्नस्य निष्कृतिः ।
घण्टादिन्यासने गौश्च यावद्दामकदोषतः ॥
पादयोर्बन्धने चैव पादोनं व्रतमाचरेत् ।
घण्टाभरणघोषेण गौश्च बन्धनमाप्नुयात् ॥
चरेदर्धव्रतं तत्र भूषणार्थश्च यत् कृतम् ।
गौश्च भ्राद्रावघातघ्नी स्यात् कुर्यान्नैव निष्कृतिम् ॥
सदा गोरोमतुल्यानि नरकाण्यविशत्समाः ।
यः ज्ञात्वा पापसम्भीतो विप्राराधनतत्परः ॥
तद्धर्त्ता निष्कृतिं कुर्य्यात्कृतेना नाप्नुतेऽशुभम् ।
अन्यत्प्राणिवधस्याथ प्रवक्ष्यामि च निष्कृतिम् ॥
गजादिवधशुद्ध्यर्थं यद्व्रतं याच दक्षिणा ।
हस्तिनन्तुरगं हत्वा वृषभं चरमेव च ॥
दद्यात्पापशुद्ध्यर्थं गुञ्जान्दद्याद्द्रव्यं यथाक्रमम् ।
प्राणाङ्गोनिष्क्रयन्दत्त्वा चरणेवधकान्तरः ॥
तस्यातिनिष्कृतिं कुर्य्याद्वधशुद्धिमपेक्षया ।
हंसं येन कपिं श्येनं जलस्यनग्निपपिडमम् ।

भासञ्च हत्वा सुग्रीवः शुद्ध्यै देयाः पृथक् पृथक्॥
हंससारसचक्राह्वमयूरमद्गुकुक्कुटान्।
आटीपारावतक्रौञ्चशुकांश्च नक्तभोजनात्॥
येषां जघ्ने हयन्दद्यात् प्रत्येकं शुद्धये द्विजः।
मनीषिणो वदन्त्येनां भार्गीनां वधनिष्कृतिम्॥
क्रौञ्चसारसहंसाटिशिखिचक्राह्वकुक्कुटान्।
शुक टिट्टिभ मुद्गघ्नो नक्ताशी नक्ततः शुचिः॥
पारावतकपोतघ्नसारितित्तिरचाषघ्नः।
त्रिसन्ध्यान्तर्जले प्राणान् आयम्य स्याच्छुचिर्द्विजः॥
कङ्कं गृध्रञ्च श्येनञ्च अनकथ्यालिपक्षिणम्।
हत्वा स्यादुपवासेन शुचिरात्रं पराशरः॥
मण्डूकरिखुषक सर्वं हत्वागजरडिडिम्भौ।
शर्कराभोजनन्दण्ड मायसे च ददन् शुचिः॥
मेषञ्च शशकङ्कोधा हत्वा कूर्मं च मत्स्यकम्।
मार्जारकुक्कुरच्छगशाडोरांस्त्रोपर्णपथात् शुचिः॥
वृश्चिकान् जम्बुकान् हत्वा तरक्षुश्चौ तथा द्विजः।
त्रिरात्रोपोषितः शुद्धस्तिलप्रस्थप्रदानतः॥
द्विजः शाखामृगं हत्वा सिंहं चित्रकमेव च।
कृत्वा सप्तोपवासानि दद्याद् ब्राह्मणभोजनम्॥
महिषोष्ट्रगजाश्वानां हत्वा चान्युतमं द्विजः।
त्रिः स्नात्वाचोपवासेन शुद्धः स्याद्द्विजपूजनात्॥
वाराहं यदि वा रौहं हत्वा त्वगमकामतः।
अकालक्लिष्टभोजी सन्नक्तकेवेन शुध्यति॥
अथान्यत् संप्रवक्ष्यामि स्पर्शने दर्शनादिष।

अभक्ष्यभक्षणाद्यैश्च निष्कृतिं श्रोतुमर्हथ ॥
उदक्या ब्राह्मणी स्पृष्टा मातङ्गपतितेन च।
चान्द्रायणेन शुध्येत द्विजानां भोजनेन च ॥
कापालिकादिनारीं तु गत्वाऽगम्यास्तथा पराम्।
भुक्त्वा विप्रस्तदन्नं सांकुर्द्विचान्द्रव्रतेन तु ॥
कामतस्तु व्रतं कुर्यादुक्तस्त्रीगमनादिषु।
चान्द्रव्रतद्वयं शुद्धौ पराशरवचो यथा ॥
दुग्धं सलवणं शक्तु सदुग्धं निशि सामिषान्।
दन्तच्छिन्नान् सरुद्रतान् इथशावजलानपि ॥
योऽद्यादुच्छिष्टमाज्यं तु पीतशेषं जलं पिबेत्।
एकैकशो विशुध्यर्थं विप्रश्चान्द्रव्रतं चरेत्।
वासांसि यावतो यस्य पतन्ति जलबिन्दवः ॥
तद्पुण्यं जलस्थानं नरकस्य भिषान्तिकम्।
तत्र पीत्वा जलं विप्रः आत्मतृट्परिपीडितः ॥
तद्दिनशो विशुद्ध्यर्थं कुर्याच्चान्द्रायणव्रतम्।
नटीं शैलूषिकीञ्चैव रजकीं वेणुजीविनीम् ॥
गत्वा चान्द्रायणं कुर्यात् तथा चर्मोपजीविनीम्।
गां ऋषभश्चैव वैश्यस्य शूद्रं वास्यानुलोमजम् ॥
क्षत्रियादिस्त्रियं गत्वा विप्रश्चान्द्रायणं चरेत्।
ब्राह्मणान्नं ददत् शूद्रः शूद्रान्नं ब्राह्मणो ददत् ॥
द्वावप्येतावभोज्यान्नौ चरेतां भगिनो व्रतम्।
विप्रैर्यामन्त्रितो विप्रः शूद्राहृतञ्च योऽश्नुते ॥
अमुत्र पितृभोक्तारौ शुद्ध्येतामैन्दवेन तु।
समानार्षां स यो गच्छेन्मातां तृप सगोत्रजाम् ॥

मातुलस्य सुतां चैव विप्रश्चान्द्रायणं चरेत्।
पीतशेषं जलं पीत्वा भुक्तशेषं तथा हुतम्॥
अथ मूत्रपुरीषे तु द्विजश्चान्द्रायणं चरेत्।
शूलाहस्ताश्च गोमांसं अद्यादामध्यमकामतः॥
पीत्वा चान्द्रव्रतं कुर्यात् पावनं शुद्धिदं परम्।
प्राप्तः सन् पञ्च यज्ञान् यो न कुर्वीत द्विजाधमः।
परपाकरतो नित्यं आमपाकविवर्जितः॥
प्रदाता च सदा लुब्धः सोऽपचः परिकीर्त्तितः।
द्विजस्तस्यान्नमश्नाति स कुर्यादैन्दवं व्रतम्।
गणिकागणयोरन्नं यदन्नं वस्त्र याचकम्।
सीमन्तोन्नयने भुक्त्वा द्विजश्चान्द्रायणं चरेत्॥
अजानन् यः समश्नीयात् परपाकं द्विजाधमः।
सोऽभक्ष्यममश्नाति द्विजश्चान्द्रायणं चरेत्॥
महापातकिनामन्नं योऽश्नात्यज्ञानतो द्विज।
अप्रानाससकष्टं तु ज्ञानश्चान्द्रायणं चरेत्॥
प्रपातविषरज्ज्वम्बुवध्याधर्मवासकान्।
यथा हताय हत्वाच प्रत्ययसन्निकाः स्मृताः॥
केचिदेतद्विशुद्ध्यर्थं मिच्छन्ति व्रतमैन्दवम्।
दक्षिणां सहया गाश्च दद्युश्च द्विजभोजने॥
स्वद्वारे ऽतियो मासे दस्याङ्स्या समयुते।
तदन्नंमभोज्यं स्याद्भुक्त्वा चान्द्रायणं चरेत्॥
सव्यपमासदर्भो यो ब्राह्मणः समुपस्पृशेत्।
अप्रकूपानेन तत्तुल्यं पीत्वा शशिव्रतं चरेत्॥

अभक्ष्ये वा हि तत्तुल्यं चरेच्चान्द्रायणं व्रतम् ॥
आसनारूढपादः सन् वस्त्रसार्द्धपटे क्षतम्।
मुखेन धमनि भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥
उद्धृत्य वामहस्तेन यत्किञ्चित् पिबते द्विजः।
सुरापानेन तत्तुल्यं पीत्वा चान्द्रायणं चरेत्।
अश्नीयात् येन सृष्टेन उच्छिष्ट पाणिना द्विजः ॥
चरन् चान्द्रायणं शुद्ध्यै त्रीणि कृच्छ्राणि वा द्विजः।
चान्द्रायणं नवश्राद्धे पाराको मासिके यथा ॥
त्रैमासिके पादकृच्छ्रं स्यादेकाहः पुराब्दिके।
स्नानं मन्त्रेषु कुर्वीत प्राणायामत्रयम् तथा ॥
स्वैरिणीनाञ्च पुनर्भुवाञ्च य कामचारी द्विजयोषिताञ्च।
ोषितां पाकमतो यदद्याद्विप्रः स चन्द्रव्रतकृच्छ्रुचिः स्यात्॥
वेश्मन्यज्ञातचाण्डालो द्विजाते यदि तिष्ठति।
व्रह्मकूर्चं चरेन् मासान्ते स्नायी नियतेन्द्रियः ॥
स्नेहांश्च घृततैलादीन् वस्त्राणि स्वासनानि च।
वहिः कृत्वा दहेद्गेहं सशुद्धो भोजयेद्द्विजान् ॥
गोविंशति तपस्वैकान्तेभ्यो दद्याच्च दक्षिणाम्।
दुग्धं हि निष्क्रय ब्रूयु चन्द्रव्रतस्य केचन ॥
अस्य पापस्य शुद्ध्यर्थं चरेद्वा चैन्द्वं व्रतम्।
द्रम वा निष्क्रय दद्यात् इत्येके कवयोविदुः ॥
महापातकशुद्ध्यर्थं सर्वनिष्कृतये नरै।
तपग्रामेग्रविहितैः कुर्वाणैः शुद्धिराप्यते।
सुरामूत्रपुरीषाणां लीढ्वा त्वकामकामतः।
पुनः संस्कारकरणात् शुद्धेदाह पराशरः ॥

केचिद्वदन्ति तच्चास्तु तस्याग्निनावचूडनम् ॥
केचित् प्रणवयुक्तेन वारिणा मोचणं विदुः।
केशकीटकसंदुष्टं अन्नं मक्षिकयापि च ॥
मद्भस्म वारिणा तत्र प्रक्षेप्य विशुद्धयेत्।
उदक्या ब्राह्मणी स्पृष्टा क्षत्रियापि ह्युदक्यया ॥
सूर्द्धकृच्छ्रं चरेत् पूर्वं तदर्द्धमपराचरेत्।
प्राजापत्यं च विट्स्पृष्ट्वा विट्शूद्री पादमाचरेत् ॥
शूद्रा स्पृष्टाचरेत् कृच्छ्रं शूद्री दानेन शुद्धति।
ब्राह्मण्या ब्राह्मणी स्पृष्टा उदक्योदक्यया च ते।
चरेतां पादकृच्छ्रं द्वे ततो स्नाने विशुद्धति ॥
ब्राह्मणी क्षत्रिया स्पृष्टा ब्राह्मणीव्रतमाचरेत्।
अपरा क्षत्रियायास्तु वक्तव्यमेव मन्ययोः ॥
रजस्वला तु संस्पृष्टा श्वभिःशूद्रैश्च वायसैः।
स्नानं यावन्निराहारं पञ्चगव्येन शुद्धति ॥
ब्राह्मण्युदक्या संस्पृष्टा मातङ्गैर्मेदभिल्लकैः।
गोमूत्रयावकाहारा षड्रात्रेण च शुद्धति ॥
उच्छिष्टं ब्राह्मणः स्पृष्ट्वा द्विजातिस्त्रीरजस्वलाम्।
प्राजापत्येन सद्धुध्येत् चीर्णकृच्छ्रेण वा पुनः ॥
वदन्ति कवयः केचिदेतद्दोषविशुद्धये।
प्राणायामशतञ्चास्य पञ्चगव्यस्य प्राशनम् ॥
उच्छिष्टं ब्राह्मणं स्पृष्ट्वा ब्राह्मण्युदक्यया चरेत्।
प्राजापत्यञ्च गायत्री मयुतं नियमं सकृत् ॥
क्षत्रियादिभिरेतस्य स्पर्शने व्रतमाचरेत्।
अनुच्छिष्टस्य तत्स्पर्शे स्नानकर्म यतः स्मृतम् ॥

रजकादिकसस्पर्शे द्विजन्मोदक्ययोषित ।
प्राजापत्यञ्चरेद्विप्रा अन्याश्चरेयुरधात ॥
उदक्या ब्राह्मणी गत्वा क्षत्रियो वैश्यएव,च ।
त्रिरात्रोपोषित, प्राश्य गव्यमाज्य शुचिर्भवेत् ॥
क्षत्रियोचैव वैश्या च शूद्रान गत्वा तु कामत ।
चरेत् सान्तपन विप्रस्तत्पापस्य विमोचकत् ॥
वैश्याश्च क्षत्रियो गत्वा वैश्यश्च शूद्रिणी तथा ।
प्राजापत्यञ्चरेत् मासं इति ब्रूयात् पराशरः ॥
उच्छिष्टा ब्राह्मणी स्पृष्टा शुना वा श्वपचेन वा ।
शुद्धा भवति सा तावत् यावन पश्यति शीतगुम् ॥
विप्रामश्वजनी वेश्या महिष्युष्ट्रीमजा खरीम् ।
प्राजापत्यञ्चरेद्गत्वा ह्येकैकस्य विशुद्धये ।
शूद्रीन्तु ब्राह्मणो गत्वा मास मासार्द्धमेव च ।
गोमूत्रयावकाहारो मासार्द्धेन विशुद्ध्यति ॥
दृषोऽप्यश्वजनी गत्वा प्राजापत्य समाचरेत् ॥
वैश्यपत्नीमसौ गत्वा स्नात्वा सान्तपन शुचि ।
शूद्रीं तु क्षत्रिया गत्वा गोमूत्रयावकाशन ॥
दशभिर्दिवसै शुद्ध्येत् वैश्य साऽप्येवमेव हि ।
उत्तमागमने नार्यां सर्वे ते स्यु कटाग्निना ॥
महापापचर ब्राह्म परथानेन योषित ।
चण्डालमेदभिल्लानामभिगम्य स्त्रियं नर ॥
शुद्ध्येत्त्रयोव्रत कुर्वन् मासार्द्ध अघमर्षणम् ।
पतिता च द्विजाग्र स्त्री प्राजापत्यचरेद्द्विज ॥
तैलिकस्य स्त्रिय गत्वा गत्वा मद्यकृत स्त्रियम् ।

अन्त्यानाभिगतः स्त्रीणां पुत्रानुलोमजेन तु ॥
इमा निष्कृतिमिच्छन्ति हतयोनिषु केचन।
पितृव्यमातृभार्य्यां च मातृष्वसारमेव च।
भगिनीश्चैव धात्रीश्च गत्वा कृच्छ्रं समाचरेत् ॥
षण्मासं केचिदिच्छन्ति इमा गत्वा विशुद्ध्यति।
कृच्छ्रं धर्मविदो विप्राः शुद्धितत्वार्थवेदिनः ॥
गुरुपत्नीं द्विजो गत्वा मातृष्वसृदुहितृषु।
क्षिपेत् शुद्ध्यर्थमात्मानं सुसमिद्धे हुताशने ॥
उपाध्यायनृपाचार्य्यशिष्ययोषिद्गमी नरः।
षण्मासात् कृच्छ्रचरणात् शुद्धो दाह पराशरः।
क्षतचाण्डालसंस्पर्शः शतमूत्रकरो द्विजः ॥
पञ्चात्मोपोषणात् शुद्धेत् भुक्त्वाचान्तो भवेत् शुचिः।
ऋक्षीक्षितस्य संशुद्धौ केचित्प्राजापतिव्रतम् ॥
पराकं पञ्चगव्यञ्च केचित् ब्रुयुर्मनीषिणः।
उच्छिष्टं ब्राह्मणः स्पृष्ट्वा उच्छिष्टेन द्विजेन तु ॥
आचम्यैव तु शुध्येत्तां विष्णुनामानि कीर्त्तनात्।
क्षत्रियेण तु संस्पृष्टो ब्राह्मणो नक्तभोजनात् ॥
वैश्येन तु च संस्पृष्टो नक्ताशी पञ्चगव्यपः।
शूद्रेण तु च संस्पृष्ट एकरात्रोपवासकृत् ॥
उच्छिष्टैः पुनरेतैस्तु प्रोक्तं द्विगुणमर्हति।
उच्छिष्टः शूद्रसंस्पृष्टः शुना वापि द्विजोत्तमः।
उपोष्य पञ्चगव्येन शुद्धिः स्यादपरे विदुः ॥
अनुच्छिष्टोऽपि यत्स्पर्शात् स्नाति वर्णो विशुद्धये।
उच्छिष्टस्तस्य संस्पर्शे चरेत्प्राजापतिव्रतम्।

रजकाद्यन्त्यजस्पृष्टः शुद्धौ तदर्धमाचरेत् ।
ब्राह्मण्युदक्या कृच्छ्रेण प्राजापत्येन चापरे ॥
उदक्या ब्राह्मणी स्पृष्टी मृताङ्गपतितैर्नु वा ।
तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुद्ध्यति ॥
उदक्यासूतकाम्लेच्छस्पर्शोऽस्तमिते रवौ ।
अन्नदानादिधर्मेण शुद्ध्येत् द्विजोऽग्नि सन्निधौ ॥ ७
वन्दयित्वा पवित्रत्वं मन्त्राकैरग्निवायुभिः ।
मुनयो धर्मवेत्तारो रात्रौ चंद्राग्निरश्मिभिः ॥
क्षमिश्च ब्राह्मणा प्राश्य षडह पञ्चगव्यकम् ।
हेम्नो दद्य षण्मासात्तथा गाश्च विशुद्ध्यति ॥
पञ्चाहेन नृपः शुध्येत्तथा हेम दद्य गाम् ।
चतुर्थाहेन वैश्यस्तु चतुर्मासान् गवां सह ॥
त्र्यहेण च चतुर्थेन तत्माङ्ग्ध लवद्य गाम् ।
सप्तपद्यात्कृते स्नानमेतदाह पराशरः ॥
पङ्क्तिं निःसार्य विप्रस्य कामतोऽकामतोऽपि वा ।
गायत्र्या च सहस्रेण जप्येन तु भवेच्छुचिः ॥
यः कश्चिद्धरते भूमिं हेम गामश्वमेव वा ।
स न यतात्मशाद्वाऽपि तदुक्तं शुद्धिमाप्नुयात् ॥
आख्याय भूमने वापि तेन सशोधितः शुचिः ।
द्रव्यदण्डादिमुक्तिर्वा तपसा वा शुचिर्नरः ॥
निराहारा जायते च एतदाङ्कर्मनीषिणः ॥
विनिर्गता यदा शूद्रादुदक्यान्ते व्यवस्थिता ।
तदा द्विजैस्तु द्रष्टव्य इति धर्मविदो विदुः ॥
दुःस्वप्नदर्शने चैव वान्तो वा [illegible]

मैथुने कूटधूमे च सद्य स्नानं विधीयते ॥
चिताञ्च चितिकाष्ठञ्च यूपं चाण्डालमेव च ।
स्पृष्ट्वा देवलकञ्चैव सवैल जलमाविशेत् ॥
जम्बुकश्च शूकरैस्तु यदि स्पृष्टो भवेन्नरः ।
अष्टोत्तरशतं जप्त्वा गायत्र्या शुद्धिमर्हति ॥
शुनोघ्राणावलीढस्य नखैर्विलिखितस्य च ।
अद्भिः प्रक्षालनं कार्य्यमग्निना वावधूननम् ॥
श्वजम्बूकगुरो स्नात्वा नक्तं तस्य तु भोजनम् ।
नक्षत्रदर्शनं त्वन्ये इति प्राह पराशरः ॥
कुमारी तु शुना स्पृष्टा जम्बुकेन वृषेण वा ।
या दिशं भजते सूर्य्ये तां दिशं सा विलोकयेत् ॥
दिवसे तु यदा ग्रामे शुना स्पृष्टो भवेद्द्विजः ।
विप्र प्रदक्षिणीकृत्य घृतं प्राश्य विशुध्यति ॥
चातुर्वर्ण्यान्तु या नारी सुताभिगमनापि च ।
प्रक्षाल्य नाभिं यावत्तत् शिरस्यैव निर्व्वं विदु ॥
अभिगच्छन् सुतार्द्धञ्च ऋताहतो स्त्रियं द्विजः ।
न च कुर्वीत स स्नानं नाभेरधस्तु शोधयेत् ॥
तुङ्कारन्तु गरीयस्का हुङ्कारन्तु गरीयसम् ।
प्रसाद्यैतावेनयेत्स्मात् स्नात्वा शुद्धो द्विजोत्तम ।
विवादे याम्लतोऽजित्वा भार्य्या यस्य तु जायते ॥
श्मशाने जायते तस्य तमोभावेन दुष्कृतम् ।
ताडयित्वा तृणेनापि स्कन्धेनावध्य रज्जुना ॥
विवादेनापि निर्जित्य तं प्रसाद्य विशुध्यति ।
उष्णीयं च चरेत् कृच्छ्रमतिकृच्छ्र निपातने ॥

कृच्छ्रातिकृच्छ्रोऽघ्रकृपाने कृच्छ्रोऽस्यान्तरगोचिते।
प्रेत दृष्ट्वा च दग्ध्वा च शुद्धिः स्नानात् द्विजन्मनाम्।
उपवासमयो वापि ब्रह्मकूर्चञ्च पावनम्।
प्रेतभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः॥
नीयते ह्यनुगच्छेत् स त्रिरात्रं ह्यशुचिर्भवेत्।
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्॥
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति।
अनुत्त्वा दन्तकाष्ठन्तु प्रत्यक्षलवणं यथा॥
मृत्तिकाभक्षणञ्चैव तुल्यं गोमांसभक्षणम्॥
कृत्वान्यतममेतेषां शुध्यर्थं मात्मनो हितम्।
चरेत् ग्रथितं विप्र इति प्राह्रमनीषिणः॥
केचिद्वदन्ति मुनयः कृच्छ्रं प्राजापतिं तथा।
तदर्धं पादकृच्छ्रं वा ब्रूयुरन्ये द्विजोत्तमाः॥
अथोच्छिष्ट द्विजोऽज्ञानादुपद्यद्यं हि किञ्चन।
भुक्त्वा नाचम्य वा कुर्यात् त्रिसन्ध्यं केचित् निष्कृतिः॥
नक्तोपवासकाले तु चान्यत द्विगुणाचरेत्।
अष्टोत्तरशतं जप्त्वा गायत्र्याः शुद्धिमर्हति॥
अथोच्छिष्ट द्विजः स्पृष्ट्वा सोच्छिष्टं स्वपत्नेन तु।
नक्षत्रदर्शनेऽश्नीयात् पञ्चगव्यपुरःसरम्॥
अथोधोच्छिष्टं विप्राद्यं सोच्छिष्टं शूद्रं स्पृशः।
उपवासेन शुध्येयुः पञ्चगव्यस्य पावनम्॥
श्वकाकोकाकसंस्पृष्टो भुञ्जानो ब्राह्मणश्च यः।
तदन्नस्य परित्यागात् कृत्वा स्नानन्तु शुद्ध्यति॥
यज्ञोपवीतेन विना भोजन कुरुते द्विजः।

अपि मूत्रपुरीषे वा रेतःसेवनमेव च ॥
त्रिरात्रोपोषितो विप्रः पादकृच्छ्रं तु भूमिप ।
अहोरात्रोषितो वैश्यः शुद्धिरेषा पुरातनी ॥
विप्रः कुकृत्यनिष्ठीव्यं कृत्वाऽनृतभाषणम् ।
वचने पतिते कृत्वा दक्षिणं श्रवणं स्पृशेत् ॥
विप्रस्य दक्षिणे कर्णे नित्यं वसति पावकः ।
अङ्गुष्ठे दक्षिणे पाणौ तस्मात्तेन च तं स्पृशेत् ॥
प्रेक्षणं ग्रहिणोऽर्कस्य ब्रह्मेशविष्णुसंस्मृतिम् ।
गायत्र्या शतसाहस्रं सर्वपापहरं स्मृतम् ॥
गायत्र्यष्टसहस्रं तु ब्रह्महत्याविशोधनम् ।
शूद्रवधे द्विजाग्र्यस्य गायत्र्यष्टसहस्रकम् ॥
राज्ञः पञ्चसहस्राणि क्षत्रियस्य तदर्धकम् ।
योगेन गतिशीलस्तु यदि वा स्यात्सदा नरः ॥
तौ उभौ सर्वदा त्याज्यौ निश्चितं सर्वकर्मसु ।
मक्षिकासन्ततिर्धारा विप्रुषो ब्रह्मबिन्दवः ॥
स्त्रीमुखं बालवृद्धं च न दूष्यन्ति कदाचन ।
आलस्ये ह्यामवातश्च आलस्यं तथैव च ॥
आतुरः शुचयस्तानि परेषां मशुचिस्तथा ।
उत्पन्नमातुरे स्नानं दशकृत्वो ह्यनातुरः ॥
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्धः स आतुरः ।
विवाहोत्सवयज्ञेषु संग्रामे जनसङ्कुले ॥
पलायने वनेऽरण्ये स्पृष्टास्पृष्टिर्न दूष्यति ।
आद्यस्पर्शे भवेत् स्नानं द्वितीयस्यापि तन्मतम् ॥
शिरःप्रोक्षणमन्येषां मन्यत्राचमनं स्मृतम् ।

पन्नाग्रमग्निपाकाद्दन्तधावनसत्तरः ॥
दिवा कीर्तिं समश्नीयाद्दुग्धवन्ना नैव पश्यति।
पश्चाश्मलोहं फलकाष्ठचर्म भाण्डस्यतोये स्वयमेव शौचात्।
पुंसां निशाश्वेकनिःसृतानां स्त्रीणां च शुद्धिर्विहिता सदैव॥
स्नानस्पृष्टेन येन स्यात्काष्ठाद्यैर्यदि तं स्पृशेत्।
नावागोष्ठवत् स्पृशन्, तत्रोपस्पर्शनाच्छुचिः ॥
म्लेच्छलूनाशनस्पर्शे चेते वा यदि वा स्वपे।
उपस्पर्शे शिरः प्रोच्य संशुद्धो जायते द्विजः ॥
वस्त्रसस्पर्शेन तस्य सचैलाङ्गावगाहनम्।
अङ्गस्पर्शेनवस्त्रस्य वन्दति द्विजसत्तमाः ॥
चाण्डालोदकसंस्पर्शे शुद्धिः स्नानेन जायते।
तथा तद्भाण्डसंस्पर्शे स्नानमाहुर्मनीषिणः ॥
उदक्यास्पर्शने स्नायादशुकेनाङ्गतोऽपि वा।
स्याद्यतः स्पृश्यपि स्नानं तुल्याः सर्वरजस्वलाः ॥
संस्पर्शे मेदभिल्लानां तथैव ब्रह्मघातिनाम्।
पतितानां च संस्पर्शे स्नानमेव विधीयते ॥
रजस्वलायाः संस्पर्शे उपस्पर्शनमेव च।
उदक्यायास्तृतीयेऽह्नि केचिदाचमनं विदुः ॥
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थे तु विशुद्ध्यति ॥
पुरस्कृतः पुरा दैत्य त्रिशिर्षाञ्जघान यत्।
तद्वधब्रह्महत्यायास्तत्फलं स ददौ स्त्रियम् ॥
आसां तत्प्रभृति स्त्रीणामस्पृश्यत्व समाभवत्।
धर्मे दिनत्रय स्रोतच्छ्रुतिवीटिकल्पितम् ॥

शबराश्च पुलिन्दाश्च नटाश्च कैवटास्तथा ।
एतांश्च रजकस्तुल्यान् केचिदाहुर्मनीषिणः ॥
रजकाद्यभिगामित्वे वैश्यो गोमूत्रयावकम् ।
चरन्ति षड्गुणाहोभिः कृच्छ्रं वा द्विगुणञ्चरेत् ॥
ब्रह्मक्षत्रियविड्जाता शूद्रास्तेऽनुक्रमेण तु ।
क्रमातिक्रमतश्चान्ये म्लेच्छान्त्यवर्णसम्भवः ॥
भोज्याशनास्तु तच्छूद्रा अन्ये भोज्याशनाः स्मृताः ।
आमाशनानि भोज्यानि हतमुच्छिष्टमुच्यते ॥
दासनापितगोपालकुलमित्रार्द्धसीरिणः ।
भोज्यान्नो नापितश्चैव यश्चात्मानं निवेदयेत् ॥
पर्युषितं चिरस्थञ्च भोज्यं स्नेहसमन्वितम् ।
यवगोधूमावंसेधो तथा गोरसविक्रयः ॥
आपद्गतो द्विजोऽश्नीयात् गृह्णीयाद्वा यतस्ततः ।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा ॥
आंपितं शूद्रगेहेऽन्नं पक्वञ्च यद्भवेत् ।
नीत्वा नद्यादिकं तद्वै प्रोक्ष्य भुञ्जन्नकिल्बिषी ॥
गायत्र्योङ्कारसूक्ताभिः केचिदद्भिश्च प्रोक्षणम् ।
मन्यन्ते विष्णुमन्त्रेण कलिधर्मसमाः स्मृताः ॥
आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः ।
म्लेच्छभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयः स्मृताः ॥
आभीरभाण्डसंस्थानि पयोदधिघृतानि च ।
तावत्पूतं हि तद्भाण्डं यावत्तत्र तु तिष्ठति ॥
पूतानि सर्वपुष्पाणि काकस्पर्शाश्रितानि च ।
म्लादत्तानि च भक्ष्याणि दत्तानि द्विजातिभिः ॥

सर्वैः स्वोपस्करैर्युक्ता शय्या रक्तांशुकानि च ।
पुष्पाणि चैव शुद्ध्यन्ति प्रोक्षणान्नि न संशयः ॥
अलेपं स्वर्णयं भाण्डं भाण्डं सम्यगमेव च ।
प्रोक्षणादेव शुद्ध्येत सलेप मग्निताडनात् ॥
अम्बाना शुध्यते कामं भूर्याथ न लिप्यते ।
सुरा मूत्रपुरीषाभ्यां शुद्धेमे तापलेपनैः ॥
मलिन मस्तमूत्राद्यैः स्नान मन्त्रेन शुद्ध्यति ।
रजसा स्त्री मनोदुष्टा नदाय वेगसंयुता ॥
अवेगमपि यद्वारि सरिद्वारि ह्रदश्च यत् ।
सकृदस्पर्शसंस्पृष्टं न तद्दूष्यन्ति सज्जिर ॥
सत्येन पूयते वाणी धर्मः सत्येन वर्तते ।
तस्मात्सत्यं हि वक्तव्यमात्मशुद्धौ द्विजातिभिः ॥
रथ्याकर्दमतो यानि नावः पथि तृणानि च ।
मारुतार्केण शुद्ध्यन्ति निशि चन्द्रर्क्षमारुतैः ॥
यथात्मन्त्र सुक्तानि प्रायश्चित्तानि सत्तम ।
उक्तानुक्तानि सर्वाणि ज्ञातव्यानि द्विजातिभिः ॥
प्रायश्चित्त न तत्प्रोक्त धर्मशास्त्रप्रवर्तृभिः ।
द्विजैस्तत्र प्रकल्प्यं स्याद्धर्मशास्त्रार्थचिन्तकैः ॥
क्ता मया निष्कृतयः समासात्मशुद्धये वर्णचतुष्टयस्य ।
तानि तासा विहितानि यानि वक्ष्याम्यतस्तानि निबोधयेति॥
इति श्रीदत्तपराशरीये धर्मशास्त्रे सुव्रतप्रणीते प्राय-
त्तनिर्णयो नाम षष्ठोऽध्याय ॥ ६ ॥

## सप्तमोऽध्यायः ।

व्रतान्यथ प्रवक्ष्यामि चान्द्रादिक्रमेण तु ।
पापचर्यकृतैर्यैः स्याद्धर्मार्थौ च प्रचोदय ॥
चन्द्रवृद्ध्याशीसाद्ग्रासान् शुक्ले कृष्णे च ह्रासयेत् ।
चन्द्रक्षयेण सोऽकार्यं मास्यं यवव्रतश्चरेत् ॥
विपरीतान् क्रमाद्ग्रासानादावादौ च ग्रासयेत् ।
पर्वान्ते दैन्यपचेत्तु पिपीलीमध्यमैन्दवम् ॥
अष्टावष्टौ समश्नीयात्स व्रती प्रतिवासरम् ।
अष्टग्रासिकमित्येव चान्द्रायणमथापरम् ॥
शतद्वयं तु पिण्डानां चत्वारिंशत्समन्वितम् ।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥
चतुरः प्रातरश्नीयात्सायं ग्रासांश्च तावता ।
शिशुचान्द्रायणं तज्ज्ञैः प्रोक्तं पापापनोदनम् ॥
मध्यन्दिने ह्यश्नीयात्सायं ग्रासांश्च तावता ।
चान्द्रायणं यतीनां तत्तज्ज्ञैः परिकीर्तितम् ॥
त्रिखण्डसम्मितान् ग्रासान् चन्द्रव्रतप्रयोजने ।
दोषः स्यादन्यथाभावे तस्मादुक्तं न हापयेत् ॥
एकभुक्तैश्च नक्तैश्च तथैवायाचितैरपि ।
उपवासैश्चतुर्भिश्च कृच्छ्रं षोडशभिर्दिनैः ॥
उष्णं जलं पयः सर्पिरेकैकस्य त्र्यहं पिबेत् ।
वायुभक्षस्त्र्यहं तिष्ठेत्तप्तकृच्छ्रोऽयमुच्यते ॥
पलमेकं जलं पीत्वा पलमेकं तथा पयः ।
पलमेकं तथाज्यस्य मानमेतत्प्रकीर्तितम् ॥

एतत्तु त्रिगुणं प्रोक्तं महासान्तपनं स्मृतम्।
प्राजापत्यस्य कृच्छ्रस्य पराकस्त्रिगुणो महान्॥
पद्मोदुम्बरराजीव बिल्वपत्र कुशोदकम्।
प्रत्येकं प्रत्यहं प्रोक्तं पर्णकृच्छ्रः प्रकीर्त्तितः॥
प्रत्येकं प्रत्यहं गव्यं सप्त मुञ्जी पयो दधि।
घृतं कुशोदकं पीत्वा उपवासश्च सप्तमः॥
एभिः कृच्छ्रागतैरुक्तं दिव्यं सान्तपनं द्विजैः।
सप्ताहेन तु कृच्छ्रोऽयं मुनिभिः परिकीर्त्तितः॥
एतत्तु त्रिगुणं तज्ज्ञै महासान्तपनं स्मृतम्।
प्राजापत्यस्य कृच्छ्रस्य पराकस्त्रिगुणो महान्॥
एकभुक्तस्य नक्तस्य ययाचितविशेषयोः।
पादकृच्छ्रोऽयमुद्दिष्टः क्षिप्रं प्राजापतिव्रतम्॥
त्र्यहमेवातिकृच्छ्रः स्यात्पाणिपूतान्नभोजनम्।
कृच्छ्रातिकृच्छ्रपयसा दिवसानेकविंशतिम्॥
दिनैर्द्वादशभिः प्रोक्तः पराकः समुपोषितैः।
एकभक्तत्र्यहादीनि नक्तस्यैव यथा स्मृतम्॥
सम्भाग्य तिलपिण्याक तक्र तोय कुशोदकान्।
पञ्चमे ह्युपवासः स्यात्सौम्यकृच्छ्रोऽय मुच्यते॥
चान्द्रायणे च कृच्छ्रे च त्रिकाल स्नानमाचरेत्।
स्नानद्वयन्तु कर्त्तव्य वनेष्वेवापरेषु च॥
शक्तिं ज्ञात्वा शरीरस्य स्नानं कार्य्यं तथा व्रतम्।
असामर्थ्येन कार्य्यन्तु याच पर्यन्तमुग्रहम्।
ब्रह्मकूर्चं प्रवक्ष्यामि व्रतानामुत्तमं व्रतम्॥
क्षणेन येन मुच्यते प्राणिनः सर्वकिल्बिषैः।

नीलिकायास्तु गोमूत्रं कृष्णायाः सकृदुद्धरेत् ॥
पयश्च ताम्रवर्णायाः पीतायाश्च तथा दधि।
कपिलायाः घृतञ्चैव महापातकनाशनम् ॥
अभावे सर्ववर्णानां कपिलायाः समुद्धरेत्।
पलानि पञ्च मूत्रस्य अङ्गुष्ठार्धन्तु गोमयम् ॥
क्षीरं सप्तपलं ग्राह्यं दध्नः पलत्रयं तथा।
घृतं चाष्टपलं ग्राह्यं पलमेकं कुशाम्भसः ॥
मन्त्रैः सर्वाणि चैतानि अभिमन्त्र्याथ मिश्रयेत्।
गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ॥
आप्यायस्वेति वै क्षीरं दधिक्राव्णस्तथा दधि।
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ॥
निर्मन्थं पञ्चगव्यञ्च पात्रैः क्रमेण तत्पिबेत्।
मध्यमेन पलाशस्य तत्पत्रेण पिबेद्द्विजः ॥
द्वितीयं पद्मपत्रेण ब्रह्मपत्रेण चापरम्।
चतुर्थं ताम्रपत्रेण तत्पिबेद्वतकृद्द्विजः ॥
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु।
उद्धृत्य प्रणवेनैव तत्पिबेत्प्रणवेन तु ॥
विष्णुं संस्नापयेद्भक्त्या पञ्चगव्येन चार्चयेत्।
कूष्माण्डैर्जुहुयान्मन्त्रैः पञ्चगव्यं हुताशने।
सव्याहृत्या च गायत्र्या तथैव प्रणवेन च ॥
ब्रह्मकूर्चमिदं प्रोक्तं व्रतं पञ्चदिनात्मकम्।
पञ्चगव्यञ्च सम्प्राश्य पञ्चरात्रोपवासतः।
नक्तेन मासमश्नीयाद्यावच्छक्त्या दिनानि च।
पञ्चाहिकम्पारणकं व्रतमस्य प्रकीर्तितम् ॥

निर्दहेत्सर्वपापानि ब्रह्मकूर्चमिति स्मृतम्॥
अन्ये वदन्ति कवयः उपवासं विना व्रतम्॥
जप्य होमञ्च कर्त्तव्यं देवतार्चनमेव च।
पञ्चगव्यञ्च होतव्यं पञ्चगव्यं समश्नीयात्॥
ब्राह्मणान् भोजयेत्साधयावत्कुर्यादिदं व्रतम्।
यच्चगस्थिगतं पापं तिष्ठते पुरुषस्य च॥
ब्रह्मकूर्चो दहेत् सर्वं समिद्धाग्नि रिवेन्धनम्।
यानीह पापानि भवन्ति पुंसां दैवादकामादथ कामतोवा।
उक्तानि तेषां मुनिना व्रतानि शुद्ध्यर्थमेतान्यपराणि चैवम्॥
धर्मार्थमेतानि कृतानि पुंसां दद्युर्दिवौकस्त्वविमुक्तसिद्धिः।
ततोप्यपूज्यत्वमशेषलोकैस्तेजःशरीरीति चरेन् गता भीः॥
यस्यास्ति भीतिः पुरुषस्य पापात् इच्छेच्च कर्त्तुं क्षयमेनसाञ्च।
प्रीत्येव तं च व्रतदानजप्यं मोदिष्व मेतन्नतदन्यतस्तु॥
वदन्ति दानं मुनयः प्रधानं कलौ युगे नाप्यदिहास्ति किञ्चित्।
विशोधनं सर्वमिहापि पूज्यं वदामि तस्मादथ दानधर्मान्॥

इति श्रीवृहत्पाराशरीये सुव्रतप्रायश्चित्तनिर्णयः सप्तमोऽध्यायः।

---

## अष्टमोऽध्यायः।

दानानि विधिना सार्धं जगौ यानि पराशरः।
व्यासस्य तानि वक्ष्यामि श्रूयतां द्विजसत्तमाः॥
दानेन प्राप्यते स्वर्गो दानेन सुखमश्नुते।
इहामुत्र च दानेन पूज्यो भवति मानवः॥

न दानात् परतो धर्मं स्त्रैलोक्ये सचराचरे ।
मुमुक्षवोऽपि योगीशा भिक्षादानोपजीविनः ॥
अन्नं तोयसमायुक्तं पृथगेते तथैव च ।
सर्वोपस्करसंयुक्तं गृहञ्च गृहमात्रकम् ॥
वृषादियुक्तसीरञ्च एकं द्वय तथैव च ।
वह्न्याग्निना प्रदानेन गोप्रदानं तथैव च ।
सौरभेयी द्विवक्त्राञ्च तिलधेनुमतः परम् ।
घृतधेनुं मधुधेनुं हेमधेनुं सविस्तरम् ॥
कृष्णाजिनप्रदानञ्च वाजिस्यन्दनमेव च ।
एकहस्तिप्रदानञ्च कन्यादानफलं तथा ॥
भूमिदानफलञ्चैव तुलापुरुषमेव च ।
हेमरूप्यप्रदानञ्च नानाकादिसमन्वितम् ॥
त्रपुसीसकताम्रादसर्वधातुप्रदानतः ।
नक्षत्रतिथियोगेषु यद्दानस्य तत् फलम् ॥
विद्यादानं फलं तस्य प्रजादानं मयैव च ।
अभयादिकदानानि प्रतिग्रहे यथाविधि ॥
इष्टापूर्त्तौ फलापेतौ सर्वं विस्तरतो मया ।
शक्तिमूलाश्रुत पूर्वं क्रमात्कथयतः शृणु ॥
गोहिरण्यादिदानानां सर्वेषामप्यनुत्तमम् ।
अन्नदानमपीच्छन्ते सर्वेऽपि हि दिवौकसः ।
अन्नार्थं मातरिश्वाद्य ह्यन्नार्थञ्च तथानलः ।
अन्ना[illegible] न्ना [illegible] वा[illegible]ति भास्करी ।
अन्नकाम. सर्वेदं विधिरप्य[illegible] जगत् ॥
तस्मादन्नात्परं तत्त्वं न भूत न भविष्यति ।

दद्यादष्टरजस्तस्माद्वं विमाय मानवः ॥
घृतं वा यदि वा चामं स स्वर्गे सुखमेधते ।
गोभनान् प्रभृतान् सर्वान् पक्वान्नपरिपूरितान् ॥
अपूपे रुदकाद्यैश्च दत्त्वा दिवं सुखं व्रजेत् ।
द्विजान् यः पाययेत्तोयं अन्यानपि पिपासितान् ॥
प्रपां तु कारयेद्ग्रीष्मे प्राप्नोति देवलोकताम् ।
षट् पात्राख्यादिकं दद्याद्वर्षासु च प्रतिश्रयम् ॥
पादाभ्यङ्गन्तथैवेध: प्रीते चावरणानि च ।
उपानत्पादुके चैव दत्त्वाभानवमाप्नुयात् ॥
मत्तवोष्णिममायुतं सर्वस्नेहसमन्वितम् ।
सर्वोपस्करसंयुक्तं सर्वालङ्कारभूषितम् ॥
हिरण्य गोष्टयाश्चैव कुलिशाद्युपधानकैः ।
चारस्त्रीभूषणैर्युक्तं सकांस्य ताम्रभाजनम् ॥
कण्डण्यादिसमायुक्तं दद्यात्कालाय मानवः ।
पर्कोष्टकाचितं कृत्वा सर्वलक्षणसंयुतम् ॥
चत्वयं वा तथा सद्यः कृत्वा चाश्ममयं तथा ।
दत्त्वा स्थानमवाप्नोति प्रजापतेरथं संयम् ॥
प्राकारा यत्र सौवर्णाः स्फटिकाश्चैस्तराणि च ।
माणिक्यगारुडैर्वज्रैर्मौक्तिकैर्भूषितानि च ॥
देवकन्यासहस्रेषु स वृतो गीतनृत्यकैः ।
सेव्यमानोऽप्सरःसङ्घैः प्रजापतिसमं वसेत् ॥
अनड्वाहौ च धूर्वाहौ बलवन्तौ सुलक्षणौ ।
तरुणौ सविषाणौ च घण्टाभरणभूषितौ ॥
अदुष्टावेकवर्णौ तु शरीरौ दक्षिणान्वितौ ।

य आहूय द्विजाग्राय दद्याद्भक्त्या तु मानवः ॥
सोऽनडुद्रोमतुल्यानि स्वर्गे वर्षाणि तिष्ठति ।
अमरीभिर्वृतोऽजस्रं सेव्यमानश्च दैवतैः ॥
एकोऽपि पिङ्गः वृषो देयो धूर्धरः शुभलक्षणः ।
अरोगश्चापरिक्लिष्टो दशधेनुसमः ॥
एकेन दत्तेन वृषेण येन दत्ता भवेयुर्दश सौरभेयाः ।
आहेमपीताद् धरणीसमानात्तस्माद्वृषात् पूज्यतमोऽस्ति नान्यः ।
वृष्टिदानं प्रवक्ष्यामि यथादेयं द्विजातिभिः ।
यो विधिर्दक्षिणायाश्च तथा सर्वं निबोधत ॥
एकरात्रोषितः स्नातो गोदाता पञ्चगव्यतः ।
पश्चाद्वैन सस्नाप्य संपूज्य मधुसूदनम् ॥
सवत्सां वस्त्रसंयुक्तां शतयज्ञोपवीतिनीम् ।
सुविषाणां सुरूपाञ्च सर्वलक्षणसंयुताम् ॥
हेमकल्पितशृङ्गाञ्च सुरूपां चरणायकाम् ।
पयस्विनीं सुशीलाञ्च हिरण्योपरि संस्थिताम् ॥
हिरण्यं वाचयित्वाग्रे स द्विजायोपपादयेत् ।
प्राङ्मुखाय च विप्राय दृष्टिन्ताञ्च उदङ्मुखीम् ॥
इमां त्वं प्रतिगृह्णीष्व प्रीतोऽस्तु केशवो हरिः ।
इति दत्त्वोदकं हस्ते पादान्यष्टौ विसर्जयेत् ॥
व्यावर्त्तेत ततः पश्चात् प्रणम्य शिरसा द्विजम् ।
अनेन विधिना धेनुं यो विप्राय प्रयच्छति ॥
स विष्णुप्रीणनाद्याति विष्णुलोकमसंशयम् ।
आत्मनः पुरुषान् सप्त प्रागस्तान् सप्त सप्त च ॥
आत्मानं सप्तजन्मोत्थात् पापाद्विमुच्यते नरः ।

पदे पदे तु यज्ञः स्याद्गोर्वत्सस्य च मानवः ॥
फलमाप्नोति विप्रेन्द्राः शुद्धा वै तत्पुरा हरेः।
सर्वकामसमृद्धात्मा सर्वलोकेषु पूजितः।
नाम्ना पापपराधीनस्तावद्यावदिन्द्राश्चतुर्दश ॥
इक्ष्वाकुणा तथा चान्यैर्बहुधा वसुधाधिपैः ॥
यैर्या दृभिरिय दत्ता जग्मुस्तेऽपि च विष्टपम्।
दीयमानं च पश्यन्ति ये भवन्त्यनुमोदकाः॥
तेऽपि पापविनिर्मुक्ताः विष्णुलोकमवाप्नुयुः।
पादद्वय मुखं योन्यां प्रसवन्त्या प्रदृश्यते॥
यदा च द्विमुखी गौः स्यात् देया यावन्न सूयते।
पृथ्वीतुल्या तदा सा गौः सर्वेरुक्ता मुनीश्वरैः॥
सापि प्राग्विधिना देया सद्भाख्या दोग्धना द्विजाः।।
एकत्र पृथिवी सर्वा सशैलवनकानना ॥
तस्या गौर्ज्यायसी साक्षादेकतोभयतोमुखी।
गोर्वत्सस्य च लोमानि यावत्संख्यानि सत्तमाः।॥
तावत्संख्यानि सर्वाणि ध्रुवं ब्रह्मजने वसेत्।
यथारोगामक्लिष्टाङ्गीधेनुं वा यदि वा ततुम्॥
दद्यात् स्वर्गमवाप्नोति देया यथा तथाहि गौः।
तिलधेनु प्रवक्ष्यामि प्रीणनाय हरेरिमाम्।
यया तुष्यति गोविन्दो दत्तया तु गवाऽनघ॥
ब्रह्महा स्वर्णहा गोघ्न पितृमातृसुहृद्धवात्।
अग्निदो गुरुहा चैव तथैव गुरुतल्पगः॥
सर्वपापसमायुक्तो यक्तो यथोपपातकैः।
सर्वैनोभिः प्रमुच्यन्ते तिलधेन्वा प्रदत्तया॥

अनुलिप्ते महीपृष्ठे वस्त्राजिनप्रसारिते ।
धर्मज्ञा केचिदिच्छन्ति कुतपेच तिलाहरे ॥
प्रस्तीर्थं चाविकं भूमौ तत्र कृष्णाजिनं पुनः ।
तिलांस्तु प्रक्षिपेत्तत्र कृष्णाटकैश्चतुष्टयम् ॥
कुर्यादुत्तरतोऽभ्युर्यो आढकेन तु वत्सकाम् ।
सर्वरत्नैरलङ्कुर्यात् सौरभेयीं सवत्सकाम् ॥
कार्ये हेममये शृङ्गे साऽत्र रूप्यमयी तथा ।
ताम्रपृष्ठेक्षुपादाच कार्या मुक्ताफलेक्षणा ॥
गन्धमाल्यवती फलरत्नवती तथा ।
शुभसज्ञयलाङ्गूली नवनीतस्तथान्वितः ॥
नारङ्गैर्बीजपूरैश्च जम्बीरैर्नारिकेलकैः ।
मदराम्रकपित्थैश्च मणिमुक्ताफलार्चिताम्॥
सितवस्त्रयुगच्छन्ना सितच्छत्रसमन्विताम् ।
ईदृग्विधाश्च ता कुर्यात् श्रद्धया परयान्वितः ॥
कांस्यापदोहना दद्यात् केशव। प्रीयतामिति ।
कुर्यादि इष्टिबहिद्दानिमा प्रत्युत्तरामुखीम् ॥
सम्यगुक्तां विधिवद् दत्त्वैतेन द्विजोत्तम ।
सर्वपापैर्विनिर्मुक्तः पितरं स पितामहम् ॥
प्रपितामहमेवं तथा पूर्वं पुरुषाणां चतुष्टयम् ।
द्विजेन्द्राऽऽतारयत्येव तान्तिलधेनुप्रदो नरः ॥
यश्च गृह्णाति विधिवत् पुरुषान् सोऽपि तारयेत् ।
चतुर्दश तथा येच दद्यतामनुमोदितः ॥
दीयमानञ्च पश्यन्ति तिलधेनुश्च ये नराः ।
तृण्यन्ति येच ता भक्त्या परया नाम तारयाः ।

तेऽप्यशेषाघनिर्मुक्ता. प्रयान्ति विष्णुलोकताम् ॥
प्रयान्ताय तुगीताय तथा मत्सरिणे बुध ।
तिलधेनु नरो दद्यांद् दद्यात्तं च धार्मिके ॥
चिराय यस्तिलैर्धारम्भिलधेनुं प्रयच्छति ।
तथैव दारान्तु पुनस्त्रिरात्रन्तु सर्वैक्तिकं ॥
दातुर्विशुद्धपापस्य तत्वं पुण्यवतो द्विज, ।
चान्द्रायणाद्व्यधिकं यस्य तत्तिललक्षणम् ।
एव प्रतिगृह्णीतापि आदत्ते विधिना द्विज ॥
स तारयति दातारं आत्मानञ्च न संशयः ।
प्रतिग्रहन्तु दीप्ताग्निदग्धविप्रमुखेरिता ॥
न स्पृशेल्लोह मन्त्राच जपहोमादिकेषु च ।
तदा न दीर्यते तस्य न तं कर्मणि योजयेत् ॥
निष्पन्नं ततृहतं कर्म ब्रतस्यैपधदानवत ।
अथात. संप्रवक्ष्यामि घृतधेनुमपि द्विज । ।
येन सा विधिना देया तां प्रवक्ष्यामि. शृणु ॥

वदामि धेनु घृतकल्पिता यो विधिश्च यैवे नियमैः प्रकल्प्या ।
फलं प्रदाने मनुजस्य यस्मात् क्रमाच्च पालनमनुपर्व यैश्च ॥
गोक्षीरसर्पिर्मधुपण्डदध्ना संस्थाप्य विष्णु शुभवारिणा च ।
सपूज्य पुष्पैश्च विलेप्य गन्धैर्दद्यान्निवेद्यञ्च सधूपदीपम ॥
घृतञ्च वह्निर्घृतमेव सोमो घृतञ्च सूर्यो घृतमेव चाम्भ. ।
मदेहि तस्मात् घृतमेव विद्वन् ! घृत मर्यन्तो महान प्रदत्तम् ॥
घृतेन गव्येन तु पूर्णकुम्भ प्रकल्पयेत् गो करकस्य वत्स ॥
हिरण्यगर्भा मणिरत्नशोभा तुरन्दरमरसुचारुनासम् ॥

शृङ्गे च कृष्णागुरुदारवे च सौवर्णनेत्रे पटसूत्रसास्ना ।
क्षौमञ्च पुच्छं गुडदुग्धवक्त्रा जिह्वा च तस्या वरशर्करायाः ॥
द्राक्षोत्थैर्वा हि खर्जूरैरन्यैः स्वादुफलैरपि ।
उरस्तस्याः प्रकर्त्तव्यं पृष्ठन्ताम्रेण धीमता ॥
इक्षुयष्टिमयाः पादाः शफाः रौप्यमयास्तथा ।
धान्यैश्च सप्तभिः पार्श्वौ लोमानि सितसर्षपैः ॥
कांस्यदोहाच कर्त्तव्या मितवस्त्रच्छदा तथा ।
सितच्छत्रसमायुक्ता सितचामरभूषिता ॥
सितयज्ञोपवीता च सितस्रग्दामभूषिता ।
मत्स्यं कुर्यादिति सङ्गतानि प्रोक्तानि सर्वाण्यपि यानि धेनोः ।
अङ्गानि सर्वाणि च तद्वदस्य छत्रं सवस्त्रं च तथैव विप्र ? ॥
गुडाग धेना मम पापहत्यै दुग्धाब्धिसारपयोधिपोतः ॥
संसारतारो भुवि भूमिदेव । स्वर्गं प्रदेहि त्वम विप्रराज । ।
विष्णुः सुरेभ्यो घृतदधिरस्याः प्रीतोऽस्तु दानेन वरं प्रदातु ॥
व्याहृत्य चैतन्निजकंस्ततोय दत्त्वा क्षमस्वेति च वाग्विधेया ।
दाता द्विजेनाथ तु पूर्वमुक्तं सम्प्राप्य मर्पिर्वतमात्मशुध्यै ॥
कार्यं प्रमुक्तोऽखिलकिल्बिषैस्तु प्राप्नोति लोकान् घृतदुग्धदिग्धान् ॥
घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ।
तेषु लोकेषु विप्रेन्द्र । सुपुण्येषु प्रजायते ॥
पितॄनूर्ध्वन्तु ये सप्तपुरुषास्स येऽप्यधः ।
तांस्तेषु द्विजश्रेष्ठेषु स नयत्यक्तकिल्बिषः ॥
स कामानामियं दृष्टिः कथिता तव सत्तम । ।
विष्णुलोकं नरा यान्ति निष्कामा घृतधेनुदाः ॥
जलधेनुं प्रवक्ष्यामि प्रीतये दत्तया यया ।

देवदेवो हृषीकेशः सर्वेशः सर्वभावन ॥
जलधेनुं द्विजश्रेष्ठ। सम्पूर्णं रजतस्थितम् ॥
रत्नगर्भमशेषैस्तु ग्रामैर्वन्यैः समन्वितम्।
सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम् ॥
कुष्ठमांसीमुरोशीर बालकामलकैर्युतम्।
प्रियङ्गुपत्रसंयुक्तं सितयज्ञोपवीतिनम् ॥
सोपानत्कञ्च सच्छत्रं दर्भविष्टरसंस्थितम्।
चतुर्भिः संवृतं पात्रैः तिलपूर्णैश्चतुर्दिशम्।
स्थगितं दधिपात्रेण घृतक्षौद्रवता मुखे।
उपोषितः समभ्यर्च्य वासुदेवं सुरेश्वरम् ॥
पुष्पधूपोपहारैश्च यथाविभवसम्भवम्।
सङ्कल्प जलधेनुञ्च समभ्यर्च्य जनार्दनम् ॥
पूजयेद्वत्सकं तद्वत् कृतञ्जलमयं बुधः।
अत्रोचुरपरे केचित् पूजयेत् घृतवत्सकम्।
पञ्चांशेन तु कुम्भस्य चतुर्थांशेन वा परे।
एवं संपूज्य गोविन्दं जलधेनुं सवत्सकाम् ॥
सितवस्त्रधरः शान्तो वीतरागो विमत्सरः।
दद्याद्विप्राय विप्रेन्द्र! प्रीत्यर्थं जलशायिनः ॥
जलशायी जगद्योनिः प्रीयतां मम केशव।
इति चोच्चार्य्य विप्रेन्द्रो विप्राय प्रतिपादयेत् ॥
अपक्वाशनिना स्थेयं अहोरात्रमतः परम्।
अनेन विधिना दत्त्वा जलधेनुं द्विजोत्तम! ॥
सर्वराज्यमवाप्नोति यत् यत् ध्यायेत् स मानवः।
शरीरारोग्यमाप्नोति प्रशमः सर्वकामिकः ॥

नृणां भवति दत्तायां जलधेन्वां न संशयः ।
इमामपि प्रशंसन्ति जलधेनुं द्विजोत्तम ! ॥
ये नरास्तेन वै यान्ति विष्णुलोकं समव्ययम् ।
हेमाद्यैर्व्यञ्जितैर्विद्वन् । यद्यपि गो प्रकल्पिताम् ॥
भक्त्यास्तु ते तथाप्येव धर्मशास्त्रमतोद्विज ! ।
अथातः संप्रवक्ष्यामि दानानामुत्तमं परम् ॥
यद्दत्त्वा मानवो याति सायुज्यं परमेश्वरम् ।
धेनुर्देया सुवर्णस्य कारयित्वा द्विजातये ॥
यां दत्त्वा ब्राह्मणीपाला, ब्रह्मणः सदृशव्रताः ।
सा चतुर्भिस्त्रिभिर्वाप्यथ सुवर्णपलैर्द्विजः ॥
द्वाभ्यां वापि पलाभ्यां तु पलेनैकेन वा शुभ ।
हीनं तु नैव कर्त्तव्यं सत्यां सम्पदि स द्विज ॥
हीनन्तु कुर्वतो दानं दातुस्तु निष्फलं भवेत् ।
चतुर्थांशेन धेन्वास्तु हेमवत्सं प्रकल्पयेत् ॥
सर्वरत्नैरलङ्कुर्यात् द्रव्यमायाक्रमशो तु ।
राजतं वत्सकं कुर्यात् खुरन्ये च तद्विदः ॥
अनङ्गारांश्च सर्वेऽपि गोवद्रत्नैः प्रकल्पयेत् ।
भक्त्या वासुदेवस्य सुगावीयां युधिष्ठिर ॥
दत्त्वा प्राप्नोति परं लोकं सा मयैवमुदीरिता ।
मुक्ताफलमयी कार्या यथालङ्कारविभागशः ॥
पद्मरागाक्षियुग्मा च इन्द्रनीलकनीनिका ।
कर्पूरागुरुनासा च शर्करारसना तथा ॥
सुष्टुद्द्युग्मपार्श्वा च क्षेमसारास्थावती तथा ।
इत्यादिगुणसंपन्नां च सदंशां समानकम् ॥

नारीकेलैश्च कर्त्तव्यौ कर्णौ पृष्ठञ्च कांस्यकम् ।
सप्तद्रु सूत्रलाङ्गूल सप्तधान्यसमाहता ॥
फलपुष्पोपसम्पन्ना छत्रोपानतसमन्विता ।
सुवर्णधेनु कार्या च विप्राय प्रतिपादयेत् ॥
अश्वमेधसहस्रस्य दत्त्वा फलमवाप्नुयात ।
कुलाना हि सहस्रन्तु स्वर्गं नयत्यसंशय ॥
किमन्यैर्बहुभिर्दानै रत्नहेमगवाऽनया ।
हेमधेनुप्रदानेन कृतकृत्यो हि वर्त्तते ॥
हिरण्यगर्भो भगवान् प्रीयतामिति कीर्त्तयेत् ।
उपवासी विशुद्धात्मा दत्त्वा सोमरविग्रहे ॥
दीयमानाश्च पश्यन्ति ये नरा हेमगामिमाम् ।
रचोभूतपिशाचाद्या ततो नश्यन्ति सद्द्विज ॥

एता मयोक्तास्तव वत्स। सर्वा हृष्टादिका वत्सरतोऽत्र गावः।
इक्ष्वाकुभूतनरपति चितीश्च उत्सृजेयं विधिवत् प्रदाय ।

कृष्णाजिनस्य दानस्य प्रवक्ष्यामि यथाविधिम् ॥
प्रमाणञ्च विधिर्यस्य यस्मै विप्राय दीयते ।
वैशाख्या पूर्णिमायाञ्च कार्त्तिक्या माघवाऽपि वा ।
अयनयोश्च प्रदातव्यं रविसोमग्रहेऽपि च ॥
अक्लिष्टमच्छिद्रमलोकमञ्च समाचारम् प्रथमं स्यात्कम्
साखुरं प्रदेयं सविषाणवक्त्रं शस्तं प्रदाने मितकृष्णचर्म।
एतमेव विधं चर्म गृहीत्वा द्विजपावनम् ।
कलयेदनुवन्तञ्च हेमशृङ्गादिकं पुनः ।
शृङ्गे हेममये तस्य शफाश्च रजतस्य च ॥
मुक्ताफलैश्च लाङ्गूलं कुर्यात् गात्रं विवर्जयेत् ।

अनुलिप्ते महीपृष्ठे प्रसूने कृतपेऽशुके ॥
तत्र प्रसारयेन्मार्गं तिलैस्तदपि पूरयेत् ।
वदन्ति वहिदस्यैव चतुर्द्रोणास्तु पूरयेत् ।
नाभिपुन्मात्रकं कुर्य्यादपरे कवयोविदुः ॥
नाभिमात्रं वदन्त्यन्ये राशिं कुर्यादिति द्विजः ।
हेमनाभञ्च तं कुर्यात् हेमकार्येण तु द्विज ॥
शक्त्या वापि प्रकर्त्तव्यं मनः शुद्धिर्यथा भवेत् ।
सौवर्णक्षीरपूर्णन्तु प्राज्यपादौ च दापयेत् ॥
राजतं दधिपूर्णञ्च यथा दक्षिणतो द्विजः ।
ताम्रमाज्यभृत पात्रं पश्चिमस्यां तथादिशि ॥
क्षौद्रपूर्णं तथा कांस्यं चतुर्दिक्षु क्रमेण तु ।
शक्त्या वापि च कर्त्तव्यं वित्तशाठ्यं विवर्जयेत् ॥
तद्दद्याद्देवविदुषे ब्राह्मणायाहिताग्नये ।
परिधाप्यापि ते वस्त्रे चालङ्कृत्य च भूषणैः ॥
चतस्रो दृष्टयः कार्य्या दूतान्ये कवयो विदुः ।
वदन्ति कवयो गाथा मार्गमाहात्म्यवेदिनः ॥
न सा विद्यात्र विज्ञस्पुराणार्थविदोऽपरे ।
यस्तु कृष्णाजिनं दद्यात् सखुरं सृगसंयुतम् ॥
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ।
ससमुद्रगुहान्तेन सशैलवनकानना ॥
चतुरन्ताभ्र संयुक्ता पृथिवी नात्र संशय ।
कृष्णाजिने तिलान् दत्त्वा हिरण्यमधुसर्पिषा ॥
ददाति यस्तु विप्राय सर्वन्तरति दुष्कृतम् ।
य कृष्णाजिनमास्तीर्य हेमरत्नयुतैस्तिलैः ॥

वस्त्राद्यं सोपवासो विष्णोराराधनोद्यतः।
वैशाख्यां पूर्णिमायाञ्च कार्त्तिक्यां वा समाहितः।
दद्याद् तत्तपोयुक्ते ब्राह्मणे च जितेन्द्रिये॥
शान्तानीके वाञ्छिताग्नौ प्रदद्याद्भूरिदक्षिणाम्।
यावन्त्यजिनलोमानि तिलाः वस्त्रस्य तन्तवः॥
तावन्त्यब्दसहस्राणि दाता विष्णुपुरे वसेत्।
विशेष अपरे प्राहुर्विषुवायनयोर्द्वयोः॥
तद्वत्पावकहिलोम प्रग्रीवं तु प्रसारयेत्।
चतसृषु तथा दिक्षु सौवर्णराजतानि च॥
निधाय शक्त्या पात्राणि क्षीराद्यैः पूरितानि च।
तस्याः पश्चात् समिद्धाग्निं परिसमुह्य तं पुनः॥
पर्युक्ष च परिस्तीर्य महाव्याहृतिभिस्ततः।
सद्यो हुत्वा तिलांस्तत्र विप्राय प्रतिपादयेत्॥
नाभिं स्पृशन्नदीतीय आर्गं हस्तास्यकं त्रिदम्।
धीमान्दद्याद् द्विजेन्द्राय वाचयित्वा प्रतिग्रहम्॥
पश्चाद्वस्त्रादिकं दद्यात् एष प्रतिग्रहे स्थितः।
अत्र गीताप्यथो गाथा उदाहरन्ति तद्विदः॥
दातृणां सत्तमानान्तु विशेषप्रतिपत्तये।
गोभूहिरण्यसयुक्तमार्गमेक ददाति यः॥
स सर्वपापकर्मापि सायुज्यं ब्रह्मणो व्रजेत्।
प्रोक्तेन चैतेन मुनीशमार्गं दद्याद्द्विजेन्द्रे विधिना प्रयुक्तम्।
पापानि हत्वा स पुरातनानि यायात्स वेधोवपुषा च योगी॥
सुखासनञ्च यो दद्यात् जापमाल्य यथोत्तमम्।
देवयानैर्दिवं याति स्तूयमानैः स दैवतैः॥

य रथं हयसयुक्तं हेमपुष्पैरलङ्कृतम् ।
कृतरज्जुश्च पादाद्यै र्नेत्रपादकृतैरपि ॥
तत्सर्वं स्थगितं वस्त्रैः परिपट्टालकैः शुभैः ।
मुक्ताफलै स्तथान्यैः मणिभिश्चोपशोभितम् ॥
अग्रे चैव शुभे वस्त्रे भूषितांत्यलङ्कृतम् ।
तद्भूषणैरलङ्कृत्य सुखयन्त्रसुशोभितौ ॥
समर्थायौ कषायुक्तौ ग्रीवाभरणभूषितौ ।
शुभलक्षणसंयुक्तौ तरुणौ तत्र योजयेत् ॥
रविसोमग्रहे दद्यात्फलमयान् यत्र कर्मणि ।
अयनयोर्वा द्विजाग्र्याय स प्राप्नोत्यर्कलोकताम् ॥
वसेद्दिवि समन्वन्तः सेव्यमानः स दैवतैः ।
एकमपि हि य दद्यात् सर्वालङ्कारभूषितम् ॥
स लब्धा सुवर्णांश्च सोऽर्कलोक मवाप्नुयात् ।
दद्यादश्वरथ यस्तु हेमरत्नविभूषितम् ॥
दिव्यवस्त्रपरिच्छन्न नेत्रपट्टादिभि. शुभैः ।
सौवर्णैरर्धचन्द्रैश्च राजतैर्वा विभूषितम् ॥
शुभैर्मुक्ताफलैरन्यै र्नीलरक्तादिभि स्तथा ।
अजौ सुलक्षणोपेतौ सुशीलौ निरुजावपि ॥
सुरदानौ सुरूपौ च हेमालङ्कारभूषितौ ।
दिव्यवस्त्रैः परिच्छिन्नौ कर्णशाखावलम्बिनौ ॥
पटिनेत्रादिकाचौ तौ विशिष्टमणिभूषितौ ।
ईदृग्रथञ्च सयोज्य पताकाभि विभूषितम् ॥
शोभित पुष्पमालाभिः शङ्खदुन्दुभिनिस्वनैः ।
चतुर्वेदाय विप्राय त्रिवेदाय तथा पुन ॥

शुचये च द्विवेदाय श्रोत्रियाय कृतेष्टये ।
अलङ्कृत्य स माखाभिः रङ्गलीयसुवाससी ॥
तस्य हस्तोदकं दद्यात् प्रीयतां केशवस्त्विति ।
एवं हस्तिरथं दद्यात् समभ्यर्च्य द्विजातये ॥
निहत्य सर्वपापानि विष्णुलोके महीयते ।
वसेच्चतुर्भुजस्तत्र सेव्यमानश्चतुर्भुजैः ॥
अनन्तकाले स तिष्ठेच्छङ्खचक्रगदाधरः ।
पश्यन्तीह रथे तु दीयमानं नरा द्विज ।॥
तेऽपि विष्णुपुरं यान्ति वाशिष्टस्य वचो यथा ।
एके तेऽपि कृपो दद्याद्धस्तिनश्च स भूषणम् ॥
सवस्त्र हेमरदनं नखे रजतकल्पितैः ।
मणिमुक्ताफलैर्युक्तं सुवर्णरजतान्वितम् ॥
पूर्वोक्ताय च विप्राय चतुर्वेदाय वा द्विज ।
दद्याद्य विधिवत् सोऽपि सदा विष्णुपुरे वसेत् ॥
विधिवद्यस्तु गृह्णाति सर्वमपि प्रतिग्रहम् ।
दाहलोकमवाप्नोति पराशरवचो यथा ॥
अनङ्कृत्य तु यः कन्यां ब्राह्मोद्वाहेन यच्छति ।
अन्योद्वाहेन केनापि हस्तिदानगतं लभेत् ॥
हस्तिदानस्य यत् पुण्यं तस्माच्छतगुणं फलम् ।
कन्यादा विधिवत्सर्वे प्राप्नुवन्ति ह्यसंशयम् ॥
पुत्रदानं कृमिच्छन्ति योषिद्दानं मनीषिणः ।
कन्यान्तरेऽपि मन्यन्ते पुत्रदानगतं वरम् ॥
भूमिं शस्यवतीं दद्यादाम्नु विप्राय मानवः ।
स भवभवनात्यक्ता विष्णुलोके समावसेत् ॥

योगे चर्मप्रमाणेच भूमि दद्याद्द्विजातये
स विष्णुलोकमाप्नोति केचिद्द्चर्मनीषिणः
षड्भिस्तु प्रहिता विप्रा.वशास्तूभयतो द्विज
तेनैव द्विगुणमाङ्करिति केचिन्निवर्त्तनम्
पञ्चहस्तकदण्डाना चत्वारिंशद्द दश्चाहत ।
पञ्चभिर्गुणिता सा तु निवर्तनमिति स्मृतम्
यावत्सकधेनूना सहस्र यत्र तिष्ठति ।
तद्दे निवर्त्तन प्रेयं इति केचिद्वदन्ति हि ॥
ताम्रपट्टे पटे वापि लेखयित्वा च शासनम्
ग्रामं विप्राय वा दद्याद्दशसीरमितिं पुन ॥
सीरसैकस्य वा दद्यात्तस्य पुण्य किमुच्यते ।
भूम्यंशु कणिकातुल्या. समा विष्णुपुरे वसे
भूमिदानात्परो धर्मो त्रैलोक्येऽपि न विद्यते
.पादैकमात्रदानेन तस्य विष्णुपुरे स्थिति ॥
तस्य दानात्परो धर्मस्तद्वृत्तेश्च तथा तथा ।
तस्मात्ता यत्नतो दद्याद्धरणाश्च विवर्जयेत् ॥
इहैव भूमिदानस्य प्रत्यक्ष चिह्नमीक्ष्यते ।
चितिद स्वर्गतो भ्रष्ट चितिनाथ पुनर्भवेत्
भुनक्ति च पुनर्भोगी यथा दिवि तथा भुवि ।
गजैरश्वैर्नरैर्युक्तो हेमरत्नविभूषित ॥
वरस्त्रीगणसंसेव्य स्तूयमान स्वबन्धुभिः ।
छत्रालङ्कारसंयुक्तो वस्त्रशय्योत्सवादिभि. ॥
इत्यादि भूमिदानस्य चिह्नन्तो यत्र । कीर्तित

यावत्तिष्ठति सा भूमिस्तावत् स्वर्गे महीयते ।
गृहभूमिञ्च यो दद्याद्दीनायाश्रममानकाम् ॥
गृहस्योपस्करान्दद्याद्गृहदानफलं लभेत् ।
कियन्मात्रञ्च यो दद्याद्भूमिं विप्राय मानवः ॥
तस्यापि हि महापुण्यन्स्यात्कुलमोचकम् ।
नैतस्मात्परमं दानं कियदस्ति धरातले ॥
पुण्यफलं प्रवक्ष्यामि विशेषेण तु तत् शृणु ।
हैमानि यत्र यानानि मणिभिर्भूषितानि च ॥
प्राकारा तत्र सौवर्णाश्चतुर्द्वाराः सुतोरणाः ।
दिव्याश्चाप्सरसो यत्र तासां सङ्ख्या ह्यनेकधा ॥
सुपर्वाणौ कलायुक्तौ ग्रीवाभरणभूषितौ ।
दृष्ट्वा याः कामदेवोऽपि भवेत्कामातुरः क्षणात् ।
सुकेशाः सुललाटाश्च बालचन्द्रोपमभ्रुवः ॥
सुनासाकर्णगण्डाश्च शुभोष्ठाधरपल्लवाः ।
सुग्रीवा भुजपाल्यग्रा पीनोत्तुङ्गस्तनास्तथा ॥
सुमध्योरुनितम्बाश्च सुश्रोण्यश्च शुभोरुकाः ।
सुजानुजङ्घागुल्फाश्च सुपादाः सुनखास्तथा ॥
येन रूपेण ता वर्ण्या भवन्त्यप्सरसो द्विजाः ।
वैष्णवाः गणिका सर्वाः दिव्यस्रग्वस्त्रभूषणाः ॥
दिव्यानुलेपलिप्ताङ्गा दिव्यालङ्कारभूषिताः ।
मन्मथोऽपि हि तान् दृष्ट्वा भवेत्कामातुरः क्षणात् ॥
वर्ण्यन्ते ताः कथं देव्यो या लक्ष्मीप्रतिमोपमाः ।
वैष्णवाप्सरसा सङ्घैर्वेष्टिताश्चामरादिभिः ।
गीयमानश्च गन्धर्वैः स्तूयमानश्च दैवतैः ॥

वसेन्विष्णुपुरे तावद्यावत् विष्णुरजः चितौ ।
पुण्यं वै भूमिदानस्य कथितन्तव वत्सक ।॥
मोक्षुर्धरित्री कुलपर्वताश्च पायोऽर्णवः स्वर्गतलादिकादिः ।
देयानि सर्वाणिच सर्वकामैः प्रोक्तानि दानानि पुराविद्भिः ॥
आत्मतुल्यं सुवर्णस्य रजत द्रव्यमेव च ।
यो ददाति द्विजाग्रेभ्योस्तस्याप्येतत् फल भवेत् ॥
ब्रह्महत्यादिपापैस्तु यदि युक्तो भवेन्नरः ।
स ततपापविनिर्मुक्त मोक्षे विष्णुपुरे व्रजेत् ॥
तुलापुरुषभूम्यो च दीयमानौ च ये नराः ।
पश्यन्ति तेऽपि यान्त्येव येच स्युरनुमोदकाः ॥
गुड वा यदि वा खण्ड लवणस्यापि तोलितम् ।
यो दद्यात्यात्मना तुल्य नारी वा पुरुषोऽपि वा ॥
पुमान् प्रद्युम्नवत्स । स्यान्नारी स्यात्पार्वतीसमा ।
सौभाग्यरूपसंयुक्तो भुञ्जीतान्ते त्रिविष्टपम् ॥
हिरण्यदक्षिणायुक्त रुवस्त्र भूषणान्वितम् ।
धनङ्कृत्य द्विजाग्रान्तं परिधाप्य च वाससी ।
खण्डादितोलित यद्यद्विप्राय प्रतिपादयेत् ।
सर्वकामसमृद्धात्मानन्तकाल वसेद्दिवि ॥
श्रद्धं वराह मद्वियश्च मेथ अश्वान् करेणु अद्रियीमजाय ।
भूयु पराष्ट्री मविर्श्वां मुनीन्द्रा। हेमाद्रियुक्तं सकलञ्च दानम् ।
वराणि रत्नानि च कैभरूप्य शुभानि वासांसि च काम्यतानि ।
यथाधिमात्र काभादि कृत्वा हेमादिदानं द्विज । दीयते हि ॥
केचिद्ददन्ति चैतानि कृत्वा हेममयानि च ।
सर्वोदस्का युक्तानि देयानि हेमधेनुवत् ॥

अर्चयित्वा हृषीकेशं पुष्पेऽह्नि विधिपूर्वकम् ।
अग्निवद् सुवर्णस्य विप्रमाहूय यच्छति ॥
स मुक्त्वा विष्णुलोकन्तु यदा गच्छति संभृतौ ।
तदासौ तेन पुण्येन धनयुक्तो द्विजो भवेत् ॥
यो रौप्यमुत्तमं दद्यादर्थिने ब्राह्मणाय च ।
सोऽतीवधनसंयुक्तो रूपयुक्तश्च जायते ॥
माणिक्यानि विचित्राणि नानानामानि यो नरः ।
तथा ताम्रञ्च कांस्यञ्च त्रपु वा सीसकादि वा ॥
यो दद्याद् व्रतो विप्रे स सोमलोकमवाप्नुयात् ।
सम्पूज्य सततं लोकं रूपवानिह जायते ।
घृतं ददाति यो विप्रे सोऽत्यन्तं सुखमश्नुते ॥
भोजनाभ्यञ्जनार्थं वा भवेत्सोऽपि सुखी नरः ।
तैलदानेन सततं भोजनाभ्यञ्जनाय च ॥
स्निग्धदेहोऽपि तेजस्वी रूपयुक्तश्च जायते ।
मृदङ्गञ्च सकर्पूरं तुरुष्कं चन्दनादिकम् ॥
गन्धद्रव्याणि दत्त्वा तु शुभगन्धः प्रजायते ।
ताम्बूलं पुष्पमालाञ्च पुष्पालङ्करणानि च ॥
सुमतिर्वीर्यवांश्चैव धनयुक्तश्च जायते ।
शिशिरर्त्तौ च यो दद्यादनलं सेन्धनं नरः ॥
स नमिद्धोदराग्निः सन् भग्नास्त्रयुतो भवेत् ।
यो दद्याद्ब्राह्मणेभ्यश्च नित्यं सेधाग्निं मानवः ॥
शिरायुक्तो भवेदत्र संग्रामे चापराजितः ।
किञ्च वा बहुनोक्तेन दानस्य विस्तरेण च ॥
यद्यदिष्टतमन्तस्य तत्तस्मै प्रतिपादयेत् ।

तिलान् दर्भांश्च नित्यार्थं दत्वाप्याप्नोति यच्च च ॥
भुक्त्वा स तु सुखं स्वर्गे जातश्चान भवेद्भुवि ।
गुडमिक्षुरसक्षुद्र दुग्धपर्जन्यसाधकान् ॥
फलानि दत्वा सर्वाणि स्वादूनि मधुराणि च ।
सर्वाणि फलशाकानि लवणानि तथा द्विज ! ॥
धान्यानि स्वडपार्थाणि शुभगोत्रो भवेन्नरः ।
कूष्माण्डत्रपुषं दत्वा हन्ताकादिपटोलकान् ॥
शुभानि कन्दमूलानि सुहृष्टः पुत्रवान् भवेत् ।
पद्राक्षकपित्थानि खर्जूरदाडिमानि च ॥
विल्वामलकं दत्वा पुत्रवानिह जायते ।
या नारी द्विज ! चैतानि द्विजे भक्त्योपपादयेत् ॥
सर्वं तस्य भवेत्तद्धि धेनुदानमसंशयम् ।
भोजनाच्छादनं दत्वा दत्वा वोपानहौ द्विज ॥
स्वर्गलोकन्तु सम्भुज्य सर्वकामोऽत्र जायते ।
याः पुण्यनार्यश्च सकामिपुंसां कामोपभुक्त्यै निजदेहदाः स्युः ।
गीर्वाणचेतोहररूपवत्यः पौरन्दरास्ता गणिका भवन्ति ॥
खट्वं वा मणिकां वापि शयनासनविष्टरम् ।
दत्वा च कश्चिद विद्वान् विप्रान् यः पाठयेन्नरः ॥
धरादानादिकं व्यास विद्यादानं शताधिकम् ।
विद्यार्थिनाश्च विप्राणां पादाभ्यङ्गमुपानहौ ॥
यो ददाति द्विजश्रेष्ठ ! ब्रह्मलोकं स गच्छति ।
खाटावारभ्य वेदांस्तु शास्त्रं शास्यतमं द्विजः ! ॥
अध्यापयेत् द्विजान् शिष्यान्विद्यादानं तदुच्यते ।
उपाध्यायं नियोज्याथ तस्य दत्वा च वर्तनम् ॥

विद्यां भक्त्या प्रदद्याद्यः परब्रह्मण्यसौ विशेत् ।
विद्यार्थिनेऽथ विप्राय यो दद्याद्भोजनं द्विजः ॥
पादाभ्यङ्गं तथा स्नानं सोऽपि दानाग्रभाग् भवेत् ।
य. स्वयं पाठयेद्धिमान् स्नात्वा भक्त्या च स द्विजः ॥
सा सात्म ब्रह्मभ्येति नागपृष्ठश्च संस्तुतो ।
श्लोकं वा यदि वार्द्धं च पादं पादार्द्धमेव च ॥
अध्यापयति तस्यापि नास्ति शिष्यस्य निष्कृतिः ।
मन्त्ररूपं द्विजो दद्यादेकमपि शुभाक्षरम् ।
तस्य दानस्य वै शिष्यो न कर्तुं निष्कृतिं क्षमः ॥
यद्दिम । शिष्यम तप.दितेन विद्याप्रदानेन न तुल्यमस्ति ।
नूनं धरित्र्यामविनाशि किञ्चित् तस्मात्प्रदेयन्तु तदेव विद्वन् ॥
रोगार्त्तस्यौषधं पथ्यं यो ददाति नरस्य तु ।
अन्यस्यापि च कस्यापि प्राणदः स तु मानवः ॥
किमन्यैर्भूप्रदानैश्च गोभिर्वासोभिरेव च ।
यादृक्तो प्राणहीनेन प्राणदानं मतः परम् ॥
अन्नं प्राणो जलं प्राणः प्राणश्चौषधं मुच्यते ।
तस्मादौषधदानेन दाता सुरसमो द्विज ॥
प्राणदानं हि यो दद्यात्सर्वेषामपि देहिनाम् ।
स याति परमं स्थानं यत्र देवश्चतुर्भुजः ॥
यो दद्यान्मधुरां वाचं माश्वासनकराश्च तम् ।
रोगक्षुधादिनार्त्तस्य स गोमेधफलं लभेत् ॥
क्लीबान्धवधिरादीनां रोगार्त्तानां शरीरिणाम् ।
यत्किञ्चिद्दीयते तेषां दयादानं तदुच्यते ॥
ये यच्छन्ति दयादानं कृत्वा दीनदयां नरः ।

तेऽपि तद्दानधर्मेण विष्णुलोकमवाप्नुयात् ॥
अथान्यत्सम्प्रवक्ष्यामि तिथिमाश्रित्य हे द्विज ! ।
यत्प्रदानेऽमुनिश्रेष्ठ ! विशिष्टं फलमिष्यते ॥
मासे मार्गशिरे दानं पूर्णचन्द्रतिथौ नरः ।
विधीनयं प्रवक्ष्यामि यत्प्रदानं महत् फलम् ॥
कांस्यपात्रमल्लिखितं लवणं प्रस्थपूरितम् ।
हिरण्यनाभ वस्त्रेण कुसुम्भेन च छादितम् ।
स्नाताचान्ताय विप्राय सवस्त्रं प्रतिपाद्य च ।
सौभाग्यरूपलावण्ययुक्तो भवति मानवः ॥
गौरसर्षपयुक्तेन पौष्यानुत्सादितो नरः ।
स पुनरभिषेक्तव्यः कुम्भेन हव्यसर्पिषा ॥
सर्वगन्धोदकैश्चापि फलरत्नसमन्वितैः ।
सुवर्णप्रसुप्तं दृष्ट्वा प्रदद्यात्तु द्विजातये ॥
घृतेन स्नापयेद्विष्णुं भक्त्या सम्पूजयेद्धरिम् ।
घृतश्च शुक्लयदक्तो घृतं दद्याद् द्विजातये ॥
छत्रं वस्त्रयुतं दद्यात्सोपवासः समाहितः ।
कर्मणा तेन धर्मज्ञः पुष्टिमाप्नोत्यनुत्तमाम् ॥
माघ्यां कुर्यात्तिलैः श्राद्धं मुच्यते सर्वकिल्बिषैः ।
शुभं शयनमास्तीर्य फाल्गुण्यां स द्विजातये ॥
रूपद्रविणसंयुक्तो भार्यां रूपवतीं लभेत् ।
नरः प्राप्नोति धर्मज्ञः श्रियं प्राप्नोत्यनुत्तमाम् ॥
नार्यपि शुभभर्त्तारं रूपसौभाग्यसंयुतम् ।
प्राप्नोति विपुलान् भोगान्नात्र कार्या विचारणा ॥
पौर्णमासीषु चैतासु मासर्क्षसंयुतासु च ।

एतेषामेव दानानां फलं दशगुणं भवेत् ॥
महापौर्णासु चैतासु फलमक्षयं मश्नुते।
द्वादश्यां चैव शुक्लस्य चैत्रे वस्त्रप्रदो नरः ॥
अक्षयं फलमाप्नोति नागलोकमनुत्तमम्।
इत्यन्तं कथितं विप्र ! फलं चैत्रस्य सत्तम ! ॥
दद्याद्धेमच वैशाखे द्वादश्यां यो नरः सितम्।
शुक्लेऽक्षतोदानदी च विष्णुलोकमवाप्नुयात् ॥
आस्तीर्य शयनं दत्त्वा प्रणम्य भोगशायिनम्।
आषाढशुक्लद्वादश्यां श्वेतद्वीपमवाप्नुयात् ॥
श्रावणे वस्त्रदानेन विष्णुसायुज्यमृच्छति।
गोदः प्रयाति गोलोकं मासे भाद्रपदे द्विजः ॥
प्रीणयेदश्वशिरसम् अश्वं दत्त्वा तथाश्विने।
विष्णुलोकमवाप्नोति कुलमुद्धरते स्वकम् ॥
स नरो वस्त्रदानेन कार्त्तिक्यां दिवमाप्नुयात्।
प्रदानं लवणानां तु मार्गशीर्षे महाफलम् ॥
धान्यानाञ्च तथा पौषे दारूणां सप्यनन्तरे।
फाल्गुने सर्वगन्धानां भवेद्दानं महाफलम् ॥
गजर्क्षसंयुता चैत्रे द्वादश्यां तु महाफलम्।
माघे तु माधवे शुक्लद्वादश्याचाऽऽसंयुता ॥
शायत्येन युताशुक्रे शुचौ मूलेन वैष्णवी।
नभस्यश्विनयोः पुण्या श्रावणर्क्षसंयुता ॥
पौष्णर्क्षसंयुता चैव हेमार्गे कृत्तिकायुता।
सहस्ये रिक्ययोपेता तपसि चादित्यसंयुता ॥
गुर्वर्क्षयुक्तपुण्ये च द्वादशी पावना स्मृता।

नक्षत्रयुक्तास्वेतासु दत्त्वा दानानदन्तकम् ॥
मेष च मेषसङ्क्रान्तौ गोवृष वृषसङ्क्रमे ।
शयनासनदानञ्च मिथुनोपगमे तथा ॥
कर्कप्रवेशे शकून् हि मद्द्याच्छर्करा तथा ।
सिंहप्रवेशे पात्राणा तैजसाना तथैव च ॥
तुलाप्रवेशे धान्याना बीजाना मतिचोत्तमम् ।
कीटप्रवेशे वस्त्राणा वेश्मना दानमेव च ॥
धनु प्रवेशे वस्त्राणा यानानाञ्च महाफलम् ।
मकरप्रवेशे सर्वेषा धान्याना दानमुत्तमम् ॥
स्नेहानाञ्चैव दारूणा दानमग्ने स्तथैव च ।
कुम्भप्रवेशे दानन्तु गवामर्थे तृणस्य तु ।
मीनप्रवेशे स्नानाना माल्याना मपि चोत्तमम् ॥
दानान्यैतानि मया द्विजेन्द्र। प्रोक्तानि कालेतु नर प्रदाय ।
प्राप्नोति कामान् मनसात्यभीष्टास्तस्मात्प्रशंसन्ति हि कालदानम्॥
अशौचसूतके नापि न दातव्यः प्रतिग्रह ।
सत्तोऽपि तयो देया परन्तूभयदक्षिणा ॥
रात्रौ दान न दातव्य दातव्य मभय द्विज । ।
त्रयाणामपि देयानि विद्याकन्या प्रतिश्रहा ॥
पात्रानामतिथीनाञ्च गवामपि च पूजनम् ।
रात्रावपि च कर्त्तव्य मिति पाराशरोऽब्रवीत् ॥
शुचि सन्त्वशुचिर्वापि दद्यात् गृह्णीत चोभयम् ।
अन्नय दानकालोऽय यदाभय सुपस्थितम् ॥
धान्यप्रतिग्रहो विद्वान् याद्याय शुचिना सह ।
अशौचसूतके चैव न तु याह्या भवन्ति ते ॥

अव्यक्तेनच धर्मश्च ! तथा मुक्तिमिखेन च ।
स्नात्वाचम्य पयः स्पृश्य गृह्णीत प्रयतः शुचिः ॥
द्रव्यस्य नाम गृह्णीयाद्दत्ता तथा निवेदयेत् ।
तोयं दत्त्वा तयां दाता दाने विधिरयं स्मृतः ॥
प्रतिग्रहीता सावित्र सर्वमत्र सुदीरयेत् ।
सार्थद्रव्येण तत् सर्वं तद्द्रव्यश्च सदैवतम् ॥
समापय्य ततः पयात्कामं स्नात्वा प्रतिग्रहम् ॥
प्रतिपणी पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात् ।
मन्दं पठेत राजान्यादुपांशु च तथाविधः ॥
मनसा च तथा शूद्रात् कर्त्तव्यं स्वस्तिवाचनम् ।
सोङ्कारं ब्राह्मणो ब्रूयात् निरोङ्कारं महीपतिः ॥
उपांशु च तथा वैश्ये स्वस्ति शूद्रे तथैव च ।
न दानं यशसे दद्यात् नभयान्नोपकारिणे ॥
न नृत्यगीतशीलेभ्यो हासिकेभ्यश्च धार्मिकः ।
पात्रभूतोऽपि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ॥
असत्सु विनियुञ्जीत तस्मै देयं न तद्भवेत् ।
सञ्चयं कुरुते यस्तु समादाय इतस्ततः ॥
धर्मार्थं नोपयुञ्जीत न तं तस्कर मर्चयेत् ।
यस्मै दद्याद्द्विजा ! यस्य नत्वा तमुररी नरः ॥
दानञ्च हृदि संचिन्त्य जलमध्ये जलं क्षिपेत् ।
वदन्ति मुनयो गाथां परोक्षे दानमत्फलम् ॥
परोक्षे चैव यद्दानं प्रत्यक्षात्कोटिगो भवेत् ।
दातं मनसि सञ्चिन्त्य गुणवन्त मभीप्सितम् ॥
अप्सु ब्राह्मणहस्ते वा भूमावपि जलं क्षिपेत् ।

दानकाले तु समाप्ते पात्रे चासन्निधौ जलम्॥
अन्यविप्रकरे दद्याद्दानं पात्राय दीयते।
विष्णुस्ते तारयायास्तु भ्रष्टुन्ति हि वरोदकम्॥
तद्दानं ब्रह्म संप्राप्त मक्षय्य मिति विष्णुगा:।
लक्ष्मीदृष्टा च यद्दत्तं दरिद्रायार्थिने द्विज।॥
तदचय्य समुद्दिष्ट मिति पराशरोऽब्रवीत्।
राज्यभ्रष्टश्च राजानं यस्त राज्ये निवेशयेत्।
विष्णुलोकसमं भुंक्त्व भवेत्पतिर्दिवौकसाम्॥
प्रतिश्रुत्य द्विजार्थं यो न यच्छति च तं पुन।
न च स्मारयते विप्र स्तुल्यन्तदुपपातकम्॥
प्रतिश्रुत्य तु यत्किञ्चिद्‌द्विजेभ्यो न ददाति य।
स वै द्वादश जन्मानि शृगाली योनिमाप्नुयात्॥
इत्याद्दीनि प्रवक्ष्यामि यथा लक्षणशीलितान्।
मानभूमिस्तिलादीना यथावत्ता निबोधत॥
अजातदन्ता या तु स्याद्भेदन्तसमन्विता।
वर्षादर्वाक् चतुर्थाच्चे यावदेतत प्रकीर्तिता।
सुशीला च सुवर्णा च अरोगा च यशस्विनी॥
सुवत्सा प्रथम सुता हरिगैरभिधीयते।
अरोगा या परिक्रान्टा प्रसवत्यप्रसूतिका॥
सुता सातिशयेयुक्ता सा गोसामान्यत स्मृता।
पूर्वोक्तगुणसंयुक्ता प्रत्यग्रे प्रसवा तथा॥
साथ गौर्धेनुरित्युक्ता वाचिष्ठस्यवचो यथा॥
पञ्चगुञ्जो भवेन्माष कर्षं षोडशभिर्दते।
तैश्चतुर्भि: पलं प्रोक्तं दाने मान च पुण्यदम्॥

माषकास्तै चतुर्भिश्च सेतिकेति प्रकीर्तिता:॥
ताभिश्चतसृभि: प्रस्थश्चतुर्भिराढकैश्च तैः।
द्रोणश्चतुर्भिस्तै रुक्तो भाव्यमानं प्रकीर्तितम्॥
तैलप्रसृतिभिर्भाण्डं चतसृभिर्यत्प्रपूर्यते।
तैश्चतुर्भिश्च कूर्चश्च तैश्चतुर्भिश्च वैफलम्॥
पात्रैश्चतुर्भि: स्यात्कम्भी पांटी तच्च चतुष्टयम्।
घटश्च चतसृभि स्ताभिश्चतुर्भिर्षेटं स्मृतः॥
इत्येते ऋषिभि: प्रोक्ता शतगोतिलगोसमा.।
किञ्चिच्च वक्ष्नोक्तेन दानस्य तु पुनः पुनः॥
दीयते यद्दरिद्राय कुटुम्बिने तदक्षयम्।
अकुब्धाय विप्राय भक्त्या परमया वसु॥
दीयन्ते वेदविदुषे तदुपतिष्ठन्ति यौवने।
अथान्यत्सम्प्रवक्ष्यामि दानानि निष्फलानि तु॥
तथा निष्फलजन्मानि तथा तत्र निबोधत।
वृथा जन्मानि चत्वारि वृथा दानानि षोडश॥
तानि पृथक् प्रवक्ष्यामि निबोध त्वं द्विजोत्तम।
अपुत्रस्य वृथा जन्म ये च धर्मबहिष्कृता.॥
दरिद्रस्य वृथा जन्म व्याधितस्य तथैव च।
अपुण्यस्थाने यद्दानं वृथादानं प्रकीर्तितम्॥
आरूढपतिते दानं अन्यायोपार्जितञ्च यत्।
व्यर्थं मनाह्मणे दानं पतिते तस्करेऽपि च॥
गुरोरप्रीतिजनके कृतघ्ने ग्रामयाचके।
ब्रह्मबन्धौ च यद्दानं यद्दत्तं वृषलीपतौ॥
वेदविक्रयिणे चैव यस्य चोपपतिर्गृहे।

स्त्रीजिते चैव यद्दत्तं व्यालग्राहे तथैव च ॥
परिचारके तु यद्दत्तं वृथा दानानि षोडश।
तमोवृत्तश्च यो दद्याद्भयात् क्रोधात्तथैव च ॥
विद्वद्दत्तं हि तत्सर्वं भुङ्क्ते गर्भस्थ एवहि।
ईर्ष्यया मन्युना दानं यद्दानमर्थकारणात् ॥
यो ददाति द्विजातिभ्यो बालाभावे तदश्नुते।
स्वयं नीत्वा च यद्दानं भक्त्या पात्रे प्रदीयते ॥
षष्ठसेयशुणन्तद्धि उपतिष्ठति यौवने।
यत्सुद्दिश्य शूद्राय् भक्त्या परमया वसु ॥
दीयते वेदविदुषे तदुपतिष्ठति वार्द्धके।
तस्मात्सर्वास्ववस्थासु सर्वदानानि सत्तम। ॥
दातव्यानि द्विजातिभ्यः स्वर्गमार्गमभीप्सता।
भूमेः प्रतिग्रहं कुर्याद्भूमिं कृत्वा प्रदक्षिणम् ॥
करे गृह्य तथा कन्या दासदासी तथा द्विजः।
करन्तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहः।
चारुह्य च गजस्तोत्रकर्णस्त्वाश्वः प्रकीर्तितः ॥
तथा वैकशफानाश्च सर्वेषां मविशेषतः।
प्रतिगृह्णीत गां शृङ्गे पुच्छकर्णाजिनं तथा ॥
कर्णाजाः पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः।
प्रतिग्रहं तथोष्ट्रस्य चारुह्यैव तु पादुके ॥
ईषायाम्तु रथो ग्राह्यः चत्र दण्डे तु धारयेत्।
द्रुमाणामथ सर्वेषां मूले न्यस्तकरो भवेत् ।
आयुधानि समादाय तथामुष्य विभूषणम्।
धर्मध्वज तथा सृष्ट्वा प्रविश्य च तथागृहम् ॥

अवतीर्य तु सर्वाणि जलस्थानानि यानि तु।
उपविश्य च शय्यायां स्पर्शयित्वा करेण वा॥
द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणः पठेत्।
कन्यादाने तु चं पठेद् द्रव्याणि तु पृथक् पृथक्॥
प्रतिग्रह द्विजश्रेष्ठ। तृथेवास्त भवन्ति ते।
द्रव्याणामथ सर्वेषां द्रव्यसम्प्रदानरः॥
वाचयेज्जलमादाय भृङ्गारेण प्रतिग्रहम्।
प्रतिग्रहस्य यो धर्मं यो जानाति द्विजो विधिम्॥
सद्द्रव्यस्तेन्यसंयुक्तो नरकं प्रतिपद्यते।
अथापि वक्ष्यामि विधिं विशेष वाजिदानतः॥

दातृप्रहीत्रोरपि येन पुण्य स्वर्गाय जायेत तत्पुण्यमेतत्।
गृह्णीत यो ऽश्व विधिवद्द्विजेन्द्र कुर्यादसौ पञ्चदिनानि पूर्वम्॥
पञ्चोपचारैर्धृतविष्णुपूजा कूष्माण्डमन्त्रैर्घृतदुग्धहेम।
यद्दाम इत्यादि गणत्रितीय सौङ्कारभूरादिभिरन्वितं च॥
प्रत्येकमष्टौ जुहुयाद्द्विजाग्र्य। तदा तथामानसयेद्द्विजेन्द्रा॥
सौर्येण मन्त्रेण च तद्वदष्टौ पश्चा प्रयुत नियतं जुहोति॥
कुर्याच्च गायत्र्यजपं सहस्रं पश्चात्प्रतिग्रहं तुरगं द्विजेन्द्रः।
दातापि चैतद्व्रतमाविदध्याद्द्विजाग्र्य तस्माऽनयोर्विशुद्धो।
श्रावण्यमू स्वर्यं जल लभेते अत्रापि पूज्यौ द्विजवृन्दमध्ये॥

अश्वप्रतिग्रहविधि।

पुराणगीता सु भवन्ति गाथा विशिष्ट पुण्यप्रतिपादनाय।
तिथौ प्रदत्त द्विज। यत्र पूर्वं क्रमेण चैतं पुनरुच्यतां तु॥
श्रावणे शुक्लपक्षे तु द्वादश्यां दीयते द्विज।।
गोप्रदानेन गोविन्दो वन्द्यस्तेतन्मनीषिणः॥

पक्षे शुक्ले तथा वत्स ! द्वादश्यां घृतधेनुकाम् ।
घृतार्चिः प्रणतायाल प्रदद्यात् फलदायिनीम् ॥
तथैव माघद्वादश्यां प्रदद्यात् तिलगोर्द्विज ! ।
केशवं प्रीणयन्त्याशु सर्वान् कामान् प्रयच्छति ॥
ज्यैष्ठे मासि सिते पक्षे द्वादश्यां जलधेनुकाम् ।
दत्त्वा विप्राय विधिना प्रीणयन्त्यम्बुशायिनम् ॥
यत्र वा तत्र वा काले यदा तदा प्रदीयते ।
विशेषार्थमिदं प्रोक्तं नान्यत्काले निषेधनम् ॥
पित्न् समुद्दिश्य विप्रेभ्यो निःस्वेभ्यो यत् प्रदीयते ।
भवेत्तदक्षयं दानं ब्रह्मव्यासवरैरिदम् ॥
काले पात्रे तथा देशधन न्यायार्जितं तथा ।
यद्दत्तं ब्राह्मणश्रेष्ठे तदनन्तं प्रकीर्तितम् ॥
चन्द्रे वा यदि वा सूर्ये दृष्टे राहौ महाग्रहे ।
यद्यच्च कथितं सर्वं तद्यार्के विशिष्यते ।
द्वादशी पुष्ययुक्तासु विशेषाच्छ्रवणेन तु ॥
यत्र प्रदीयते किञ्चित्तदनन्तं द्विजोत्तम ! ।
वैशाखे शुक्लपक्षे तु विशेषादपि मानवः ॥
आषाढी कार्त्तिकी चैव फाल्गुणी तु विशेषतः ।
तिस्रश्चैताः पौर्णमास्यो दाने विप्र ! महाफलाः ॥
व्यतीपातेषु सर्वेषु समस्तेषु द्विजोत्तम ! ।
ग्रहसंक्रमकाले तु तीव्ररश्मे र्विशेषतः ॥
तुला मेषप्रयागेषु योगेषु सिद्धनन्द च ।
देवैर्महाफलं दानमेभ्योऽपि स्यान्महाफलम् ॥
यदा प्रविशते भानु मकरं द्विजसत्तम ! ।

आषाढेऽश्वयुजे पौषे चैत्रे शुक्ले तथैव च ॥
द्वादशीसहितं प्रोक्तं पुण्यं दिनचतुष्टयम् ।
मिथुनञ्च तथा कन्यां धन्विनं मीनमेव च ॥
प्रविष्टे भास्करे पुण्यं कथितं द्विजसत्तम ! ।
षड़शीतिमुखं नाम दत्ते दिनचतुष्टयम् ॥
अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तम ! ।
संस्कारे चैव पुत्रस्य तदक्षय्यं प्रकीर्त्तितम् ॥
एताश्च विविधाः प्रोक्ताः स्नाश्च कार्य्यं यथोदितम् ।
सर्वास्वपिहि सद्भिरेरित्यं धर्म्मं मभीप्सुभिः ॥
सत्यप्रे निधिद्विज नालकञ्चि मिद्यार्थमुक्तानि क्रियन्ति विप्रा. ।।
दानानि व क्ष्याम्यथ पूर्त्तधर्म्मं भावेन पुंसोर्विहितेन धर्म्मः ।
ग्रहोग्रहरिसूर्य्याणां स्कन्दे भास्याश्विने तथा ।
ईशदुर्गाग्रजायाश्च स्थानानि कारयेन्नरः ॥
इष्टकामयतं वापि यथार्पयति विद्यावे ।
अनेन विधिना कुर्य्यात् विष्णुलोके संवाप्नुयात् ॥
एष यः सर्वदेवानां मन्दिरं कारयेन्नरः ।
स याति वैष्णवं लोकं परितुष्टो हरिर्न्नरः ॥
समाचरति यो भग्नं सुधया लेपयेत्तथा ।
शुभ्रं पतिश्च यस्तत्तु विशिष्टे देवलेपनैः ॥
सम्मार्जयति यस्तत्तु यथाचैवानुलेपयेत् ।
प्रदीपन्तत्र योदद्यात् स याति विष्णुलोकताम् ॥
पूजयेद्यस्तु विधिना पञ्चोपचारसंयुतः ।
स विष्णुलोकमभ्येति क्रीडते च चतुर्भुजे ॥
यावन्तत् ऐष्टिकास्तत्र विप्रदेवस्य सद्मानि ।

तावन्त्यब्दसहस्राणि विष्णुलोकं समाविशेत् ॥
स नित्यन्ततडाकानि पुष्करिण्यश्च दीर्घिकाः ।
तथा कूपाश्च कर्त्तव्या वाप्यश्च शुभमेधिभिः ॥
खातमात्रश्च कर्त्तव्यं एकादिकरजलं नरैः ।
यावत्पीत्वा जलं गौस्तु तृषार्त्तापि तृपी भवेत् ॥
पिबन्ति सर्वसत्वानि तृषार्त्ता यम्भसामिथ ।
गण्डूषानि तु तावन्ति तत्कर्त्ता तत्समन्दिवि ॥
यावन्ति ह्युपकुर्वन्ति गण्डूषानि [illegible] च ।
कुर्वता स्नानशौचादि यावदाचमनं तथा ॥
तावत्संख्यानि वर्षाणि लक्षाणि दिवि मोदते ।
अथ स च विशेत् स्वर्गे सेव्यमानोऽप्सरोगणैः ॥
आरामाश्चापि कर्त्तव्याः शुभवृक्षैः मनोभिरैः ।

न्ति खादन्ति फलानि हृत्वा वृक्षच्छिदंस्तस्य तु भक्षणीयान् ।
यि तावन्ति वर्षाणि नाके प्रत्येकमष्टपुरुषा समरौघसेव्या ॥
यि यावन्ति च पुष्पिणं दिवोकसा मूर्ध्नि धरातले वा ।
न्ति तावन्ति च वर्षाणि कल्याणि.वृक्षदिवमारुहन्ति ॥
ालपक्षैर्मधुरैरम्बु शाखच्युतैः स्वादुफलैर्नगाया ।
ि सत्वानि समर्पयस्व तस्यार्घदानेनैव हरनाथान् ॥
ष्य विष्णु जगतामधीश नारायण यत्सुकृतं करोति ।
न्यमाप्नोति कृत तु तस्मादनन्ततोऽ भववान पुराण ॥
ानि सर्वाण्यभिधाय विद्वन् । नष्टस्य पूर्तं गदमेधिकर्म ।
न्ति शान्ति मनुना प्रभाय वक्ष्यामि ततस्वादयमर्मशान्त्यै ॥
पक्षानि सर्वदानानि पूर्तानां सत्तमा. । ।
अत परं प्रवक्ष्यामि गणेशादिकशान्तय ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रणीताया
धर्मसंहिताया दानधर्मेषु पूर्तविनिर्णयो •
नामाष्टमोऽध्याय ॥

---

## नवमोऽध्यायः ।

शान्तीनामथ सर्वासा ग्रहशान्ति परा स्मृता ।
ग्रहेभ्योऽपि गणेशस्तु तस्य शान्तिरथोच्यते ॥
यदि पुष्ट्कृतकर्माणि भवन्ति फलदानि हि ।
तदा धर्मार्थकामास्तु संसिध्येरन् सदा नृणाम् ॥
तमृभि क्रियमाणाना सर्वेषां कर्मणामयम् ।
विघ्नार्थमसृजद्ब्रह्मा रुद्रश्च विनायकम् ॥

तेनोपहतपुंसान्तु कर्म स्यान्निष्फलं कृतम् ।
स्त्रीणामपि तथा सर्वं क्रियमाणन्तु निष्फलम् ॥
जलावगाहनं स्वेन क्रव्याद्वारोहणं तथा ।
खरोष्ट्रम्लेच्छसंसर्गं गुडकाषायवाससम् ॥
पश्यत्यात्मानमेवेह क्रीडन्तं प्रतिवासरम् ।
यानि कर्माणि कुर्वीत तानि स्युः क्लेशदानि हि ॥
राजपुत्रो न राज्याप्ता यद्वाप्ता न तु कन्यका ।
अलब्धेऽन्यपत्याप्ता ह्याचार्ये तु न सा द्विज ॥
अधीयानास्तु विद्याप्ता कृषिश्चात्मस्वसम्पदा ।
वणिग्वृत्तेन लाभेन युज्यन्ते तद्वतश्च सन् ॥
तस्मात्तदुपशान्त्यर्थं समभ्यर्च्य गणेश्वरम् ।
स्नपनं कारयेत्तस्य विधिवत्पुण्यवासरे ॥
स्थापनाद्येन संस्थाप्य आरक्तार्षभचर्मणि ।
सितसर्षपकल्केन साज्येनाच्छादितस्य च ॥
विलिप्तशिरसस्तस्य गन्धैः सर्वैस्तथौषधैः ।
अष्टौ वा चतुरो वापि स्वस्ति वाच्यं द्विजान् शुभान् ॥
एकवर्णैश्चतुर्भिश्च पूर्णैः कुम्भैश्च यत्नतः ।
समानीते क्षिपेत्तत्र वक्ष्यमाणास्ततस्त्विमाः ॥
अश्वेभस्थानवल्मीके ह्रदसङ्गममृत्तिकाः ।
रोचनां गुग्गुलं गन्धान् क्षिप्त्वाम्भसि तान् क्षिपेत् ॥
यत्ते द्वैपायनं धाम सहस्राक्षं ऋषिस्तुतम् ।
तेन त्वा शतधारेण पावमान्यः पुनन्त्विमाः ॥
नवाभिः पावमानीभिः कुम्भान्तामभिमन्त्रयेत् ।
शक्रादिदशदिक्पाला ब्रह्मेशकेशवादयः ॥

भगस्ते प्रन्तु दौर्भाग्यं शान्ति ददतु सर्वदा ।
सुचित्रियान इत्यादौ मन्त्रैर्नैकाभिषेचनम् ॥
वदन्ति वदता श्रेष्ठाः दौर्भाग्यस्योपशान्तये ।
समुद्रा गिरयो नद्यो मुनयश्च पतिव्रता ॥
दौर्भाग्य घ्नन्तु मे सर्वे शान्तिं यच्छन्तु सर्वदा ।
पादजङ्घोरुजङ्घाश्च नितम्बोदरनाभिषु ॥
स्तनांसे बाहुहस्ताग्रग्रीवा धमाङ्गसन्धिषु ।
नासा ललाटे कर्णाभ्रू केशान्तेषु च यत् स्थितम् ॥
तदपो घ्नन्तु दौर्भाग्य शान्ति यच्छन्तु सर्वदा ।
स्नातस्य मस्तके दर्भान् सव्येन परिगृह्य ते ॥
जुहुयात् सर्षपं तैलमौदुम्बरस्रुवेण तत ।
मितय सम्मितश्चैव तथा शालकटङ्कटौ ॥
कूष्माण्डो राजपुत्रश्चेत्यन्तस्वाहा समन्वितैः ।
नामभिश्च बलिं दद्यान्मन्त्रैर्नाम स्वधान्वितैः ॥
चतुष्पथं समाश्रित्य शूर्पे कृत्वा कुशास्तरम् ।
निधाय तेषु दर्भेषु शुक्लाशुक्लांश्च तण्डुलान् ॥
ओदनं पललोपेतं मत्स्यामान् मत्स्यकानपि ।
तथा मांसस्य कुल्माषान् तत्रैव त्रिविधां सुराम् ।
प्ररिकेण्डेरिकान् पूपान् फलानि मूलसंयुतः ॥
गच्छेत् स मातुः पार्वत्याः कुर्याद्दुपस्थितं पुनः ।
दूर्वासर्षपपुष्पेश्च पूर्णमर्घाञ्जलिं क्षिपेत् ॥
सौभाग्य मल्लिके । देहि भगरूप यशोऽपि च ।
श्रियो पुत्रांश्च कामांश्च तथा गोर्यश्च देहि मे ॥
गणेशमात । रखाले । यत्किञ्चिन्मदभीप्सितम् ।

एतन्माम्ब ! च तद्देहि देहि गौरि । वरान् वरान् ॥
धनसु वाससी शुक्ले परिधायाच ते शुभे ।
सितचन्दनलिप्ताङ्ग सितस्रग्भूषणान्वितः ॥
तान् नत्वा द्विजान् सर्वान् भोजयेद्विविधाशनैः ।
वस्त्रयुग्मं गुरोर्दद्यात्तेन तस्य वराशिषः ॥
एतानि सम्पूज्य गणाधिदेव विघ्नोपशान्त्यै जननी तथास्य ।
स्नातोक्तशस्त्रविधिना समासात्प्राप्नोति चान्यान्मनसा यमिच्छेत्॥
स्नात्वा विधायार्चनमम्बिकायाः सम्पूज्य लोकान् सह्रिबन्धुलोकान्।
आचार्यदृष्टान्वनिताकुमारी प्रध्वस्तविघ्नः श्रियमेति गुर्वीम् ॥
मृत्युञ्जमन्त्रैर्विधिवत्स शुक्लै नित्यं द्विजानन्दनपूजनं च ।
एतान्तरायान्विनिहत्य सर्वान् कुर्यादथातो ग्रहयागमेतम् ॥
इति श्रीबृहत्पाराशरीये धर्मशास्त्रे शान्त्यध्याये विनायकशान्तिः सम्पूर्णा ॥

पीतो ब्रह्मा सुराचार्य्यः शुक्लः शुक्रो भृगूद्भवः ॥
कृष्णः शनी रवेः पुत्रः कृष्णो राहुः प्रजापतिः ।
कृष्ण केतुः कश्यपश्च कृष्णपापास्त्वयोऽप्यमी ॥
कालगोऽयं पुनः सोम आवन्त्यः सोम उच्यते ।
मागधो बुध इत्युक्तो गौतमस्तु बृहस्पतिः ॥
सैन्धवो दानवाचार्य्यः सौरिः सौराष्ट्रदेशजः ।
राहुश्चाङ्गलदेशोत्थो मध्यदेशभवोऽग्निभूः ॥
जन्मदेश इमे प्रोक्ता ग्रहजातकवेत्तृभिः ।
शम्भुं रविं पुमान् चन्द्र स्कन्दभौमं हरिं बुधम् ॥
ब्रह्माणञ्च गुरुं विद्याच्छुक्रं शुक्रं यमं शनिम् ।
कालं राहुं चित्रगुप्तं केतुमित्यधिदैवतम् ॥
एतद्विज्ञाय यत्कुर्य्यात्तत्सर्वं सफलं भवेत् ।
अर्कस्त्वर्काय होतव्यः सर्वव्याधिप्रणाशनः ॥
सुधांशवे च सोमाय पालाशः सर्वकामिकः ।
खदिरश्चार्थलाभाय मङ्गलाय विवेकिभिः ॥
स्वरूपलब्ध्यपामार्गो होतव्यश्च बुधाय च ।
प्रभाप्रदस्तथाश्वत्थो होतव्योऽमरमन्त्रिणे ॥
अजी सौभाग्यलब्ध्यै या दैत्यामात्याय सद्द्विज ।
धर्मविद्यार्थलब्धीन् स द्विजे पङ्क्तिसूनवे ॥
दधिक्षीराज्यसंमिश्राः समिधः शुभलब्धये ।
शमी पापोपशान्त्यर्थं होतव्या मन्दगामिने ॥
दीर्घायुर्धर्मलब्धदूर्वा होतव्या राहवे द्विज ।
प्रादेशमात्रका सर्वा अष्टा वटेत्तर शतम् ॥
अष्टाविंशतिरेवैकं सद्धोमा प्रतिदैवतम् ।

दद्यात् फलभूयस्त्व मुक्तादन्यत्र राघवम् ॥
नव भुवनकं लेख्यं चतस्त्रं मण्डलं द्विज ! ।
ग्रहांस्तत्र प्रतिष्ठाप्य वक्ष्यमाणक्रमेण तु ।
मध्ये तु भास्करं स्थाप्य पूर्वदक्षिणतः शशी ।
दक्षिणेन धरासूनुं बुधं पूर्वोत्तरेण तु ॥
उत्तरस्यां सुराचार्यं पूर्वस्यां भृगुनन्दनः ।
पश्चिमायां शनिः कुर्य्यात् राहुर्दक्षिणपश्चिमे ॥
पश्चिमोत्तरतः केतुरिति स्थाप्याः ग्रहाः क्रमात् ।
पटे वा मण्डले लेख्या ऐशान्यां दिशि पावकान् ॥
भास्करः स्फाटिकश्चन्द्रो रक्तचन्दनकोऽपरः ।
सोमसूनु सुराचार्य्यौ स्वर्णयोभौ प्रकीर्तितौ ॥
रजतो भृगुपुत्रस्य कार्ष्णश्च स शनैश्चरः ।
राहुश्च सैसकः कार्यः कार्यः केतुश्च कांस्यकः ॥
सर्वानेतन्मया कृत्वा समभ्यर्च्य सदा ग्रही ।
लेपयेद्वर्णकैः स्वैः स्वैर्विधिवत्पीठकेन वा ॥
ग्रहाणां साधिदेवानां प्रतिष्ठापन मन्त्रकान् ।
यद्द्विज मन्त्रतत्त्वार्थवेदिनो द्विजसत्तम ! ॥
आदित्यं गर्भमित्युक्त्वा मन्त्रिं दूतमनेन वा ।
एताभ्यां स्थापयेदर्कं त्र्यम्बकम् इति शङ्करम् ॥
अप्स्वन्तरीति शीतांशुः गौरीय त इति पार्वती ।
स्योना पृथ्वीति भौमस्य य इन्द्रं देति या गुहम् ॥
इदं विष्णुं बुधः स्थाप्य तद्विष्णोरिति वै हरिम् ।
इन्द्र आगां सुराचार्य्यं ब्रह्मज्ञानं नियोधकम् ॥
इन्द्र देवी शचीः सूनुं सर्वामेत्यमराधिपम् ।

शन्नो देवी रवेः स्तुतं यमाय त्वा तथा यमम् ॥
अथ गौरिति राहुश्च काल वार्षीरसीति च ।
ब्रह्मजज्ञेति केतुश्च विद्र चिनावसोरिति ॥
ब्रूयुरेतानि मन्त्राणि मूलमन्त्राणि चापरे ।
आकृष्टेन च तीक्ष्णेरिमन्देवा निशाकरम् ॥
अग्निमूर्धेति भूसूनोरुद्बुध्यस्व बुधस्य च ।
बृहस्पतेरिति गुरो रन्नात्परिस्रुतो भृगोः ॥
शन्नो देवी शनैर्गन्तुः काण्डात् काण्डात्परस्य च ।
केतु कृण्वनग्निस्तुरयमथ प्रकीर्तितः ॥
वेदमन्त्रैः सदा पूज्या विधिना ते द्विजन्मना ।
कर्तव्याश्चरवो मन्त्रैः स्वैः स्वैश्च प्रतिदैवतम् ॥
सघृता सयवाश्चापि होतव्याश्च द्विजैस्तिलाः ।
मध्यमानामिकामूलसन्नाङ्गुष्ठ चतसृभिः ॥
यावन्तोऽङ्गुलिभिर्ग्रासा तिला स्तावत्तवाङ्गतिम् ।
हस्तमात्रं पृथिव्येकं न वेधोऽपि तावतैव तु ॥
बाहुमात्र चतस्त्र्येके एके चारत्निमात्रकम् ।
चतुरस्रं खनेत्कुण्डमेकयोनिसमन्वितम् ॥
शुभमेखलया युक्तं सुखान्तिकरमुत्तमम् ।
होमार्थं मण्डलं कुर्याच्चतुर्द्वारसमन्वितम् ॥
चतुर्दिक्षु ध्वजा कार्या नानावर्णाः शुभावहाः ।
तथा तत्तोदकुम्भाश्च दूर्वापल्लवसंयुता ॥
पुनर्नवीकृत पद्म मण्डपाभावमाश्रयेत् ।
षट्कर्मनिरताः शान्ता ये न दम्भाः प्रतिग्रहे ॥

नियोज्यास्तेऽग्निकार्यादौ स्युरनन्ता द्विजोत्तमाः ।
प्रतिग्रहा निदग्धंश्च जपहोमादि कुर्वतः ॥
यस्य मन्त्राणिवीर्याणि तत्कृत कर्म निष्फलम् ।
ओदन सगुड भानोः पायस शशिन स्तथा ॥
हविष्य भूमिपुत्रस्य क्षीरान्नश्च बुधस्य च ।
पूर्णे हविः शनेः केतो र्मोष राहो. घृताप्लुतम् ॥
चित्रान्नमग्निसूनोश्च भाज्यानामपि यस्य याः ।
होम क्रतस्तथान्येऽपि सदृक्ताय द्विजाग्रजाः ॥
यथावर्णानि वासांसि देयानि कुसुमानि च ।
देया गन्धाय सर्वेषा देयो धूपश्च गुग्गुल ॥
धेनु शङ्खो छपः स्वर्णं वासोश्यश्चासिता च गौः ।
आविन्काशलकश्चैव क्रमशो दक्षिणाः स्मृता ॥
प्रत्यह प्रतिमासश्च प्रत्यब्द वा विधानतः ।
वर्णिभिश्च ग्रहा पूज्या राजभिस्तु सदैव हि ॥
दुःस्थितो यस्य यस्तु स्यात् पूज्यस्तस्य ■ यत्नतः ।
वेधसैते नियुक्ता. प्राक् स्वभक्तं पूजयिष्यथ ॥
वर ददाति सन्तुष्टा क्रिया अग्नि र्दंपा ग्रहाः ।
असन्तुष्टा दहन्त्येते तस्मात्तानर्चयेत्सदा ॥
ग्रहाधीन मिदं सर्वं उत्पत्तिप्रलयात्मकम् ।
जगत्यभावभावौ च तस्मात्पूज्यतमा ग्रहा ॥
सानुकूले ग्रहैर्यानि कुर्यात्कर्माणि मानवः ।
सफलानि भवन्त्यस्य निष्फलानि स्युरन्यथा ॥
कुर्वन्ति चैतद्विधिना ग्रहाणा मातिथ्यमब्द प्रतिवासर ये ।

आरोग्यदेहा धनधान्ययुक्ताः दीर्घायुषः स्त्रीसहिता भवन्ति ॥

इति श्रीवृद्धहारीतीये धर्मशास्त्रे ग्रहशान्तिर्नाम शान्त्यध्यायः ।



अथेत्स कस्मात्सदनेष्वतोऽद्भुतं कपोतमेतुर्यदरण्यवासिनः ।
विशेषतो गृध्रकपोतपिङ्गलास्तथैव चोलूकसकाकवायसाः ॥

तरक्षुगोमायुवृकायुर्गोभि-
र्हि श्वापदश्वादकुतोऽपि निर्भयः ।
विशन्ति यत्वेतदतीव चाद्भुतम्
गृहे पुरे तच्छमितं हि सिद्धये ॥

अथाद्भुतानि जायन्ते सर्वेषां गृहमेधिनाम् ।
नानाविधानि तेषान्तु प्रशान्त्यै शान्तिरिष्यते ॥
यस्याद्भुतानि जायन्ते गृहे तस्य समादिशेत् ।
धनधान्यक्षयो वापि पुत्रभार्य्याक्षयस्तथा ॥
भयच्चा जायते शत्रो राज्ञो वा जायते भयम् ।
शान्तिस्तत्र विधातव्या यथोक्तं मुनिपुङ्गवैः ॥
यदि गोधूमशाखायां यवशाखोपजायते ।
यवगोधूमशाखाश्च देवसर्वौषधेषु च ॥
सर्षपे तिलशाखा च तिले शाखासु सर्षपम् ।
माषे मुद्गन्तु मुद्गे स्यात् सस्यगृहष्टिर्भवेद्यदि ॥
अश्मः पूर्णे तु कुम्भे तु ज्वलदग्निर्भवेत्सतो ।
सहपनन्तु कूपानां मक्षो वा मधुजालकम् ।
विधिवद्वायुलिङ्गैश्च निर्वाप्य पायसं चरुम् ॥
महावाताय वाताय तद्दद्यं प्रशाम्यतु ।

त्रिपक्षसप्त वा कृत्वा सर्वत्र ह्यत्र तुल्यता॥
स्त्रियो गौर्वा महिष्यावा सुतौ वत्सौ च पण्डकौ।
द्वौ द्वावप्सु प्रजायेते तत्र शान्तिर्विधीयते॥
वृषवद्गोद्वयं नष्टेत् वडवाश्ववदाहरेत्।
अश्वतरी प्रसूते वा प्रस्वेदः प्रतिमासु च॥
मृदङ्गपटहादीनामकृतोऽपि ध्वनिर्यदा।
काकश्येनकपोताद्याः प्रविशेयुर्गृहे पुरे॥
यवपिष्टेन निर्लिप्य विधिवद्वारुणं चरुम्।
मन्त्रैर्वरुणदैवत्यै र्जुहुयाद्वरुणाय तम्॥
महावरुणदेवाय ह्यपाञ्च पतये तथा।
मन्त्रैर्वरुणदैवत्यैर्मन्त्रैश्च जुहुयाच्चरुम्॥
विप्रस्तु जुहुयान्मन्त्रैरेतेन वरुणाय तम्।
अन्यस्य तुल्यतां कृत्वा स्वाहान्तैर्वरुणदैवतैः॥
इन्द्रचापेक्षणं रात्रौ प्रस्तमग्न्वलनन्तथा।
गजस्य मफबस्थाना ज्वलनं प्रतिवीक्षणम्॥
स्थूणाप्ररोहणं यत् स्याद्भाण्डस्थानप्ररोहणम्।
विद्युन्निपातवज्राणां पतनं वा भवेद्यदि॥
गृदाकुक्काकसंसर्गं विपरीतप्रदर्शनम्।
शुभाय चरुराग्नेयो निर्वाप्यो विधिवद्द्विजैः॥
अग्नये स्वग्निराजाय महावैश्वानराय च।
हृदये मम यच्चैतत्सर्वत्र च वदेद्बुधः॥
गृहशान्तिश्च सर्वत्र शनिपूजा तथैव च।
दक्षिणा मह्यया गौस्तु वस्त्रयुग्मं द्विजायते।

एतेषु चान्येष्वपि चाद्भुतेषु जातेषु सावित्रजयं सहस्रम् ।
होम विदध्यादपि विष्णुमन्त्रै र्ब्रह्मोयमन्त्रैरपिवा द्विजोत्तमैः॥
इति श्रीवृहत्पाराशरीये शान्त्यध्याये अद्भुतशान्तिः।



अभिधास्येऽथ रुद्राणां शान्तये रुद्रमेधिनाम् ।
महानाद्य विधानन्तु यत्कृतं हन्ति पातकम् ॥
ब्राह्मणो विधिवत् स्नात्वा सर्वोपद्रवनाशनम् ।
कुर्य्याद्विधानं रुद्राणां यजुर्विधाननिर्मितम् ॥
इषेत्वादिषु मन्त्रेषु च ब्रह्मा तेषु या क्रिया ।
दशप्रणवयुक्तेषु भूर्भुवः स्वरितीति च ॥
आर्षंछन्दश्च दैवत्यं न्यासश्च विनियोगतः ।
पराशरोदितं वक्ष्ये शेषं मुनिविभाषितम् ॥
मनोज्योतिरवोध्याग्निमूर्धानश्च मर्माणि ते ।
मानस्तोक इतिह्येतत्प्रथमं प्रचक्षते ॥
याते रुद्रेति तु शायाशिरोऽस्मिश्च हृदये ।
असंख्यातसहस्राणि ललाटे विन्यसेद्बुधः ॥
चक्षुषोर्विन्यसेद्रुद्रेतु त्र्यम्बकञ्च यजामहे ।
मानस्तोक इति ह्येतन्नासिकायां न्यसेद्बुधः ॥
अवतत्य धनुर्वक्त्रे नीलग्रीवाय वा गले ।
नमस्ते आयुध इत्येतत्स्मरे मन्त्रप्रकोष्ठके ॥
विन्यसेद्दासुमन्त्रोऽयं ये तीर्थानिति हस्तयोः ।
नमोऽस्तु किरिकेभ्यो वै हृदये मननाशनम् ॥
ताभ्यां विद्वान् न्यसेत् पार्श्वं नमो हिरण्यबाहवे ।

गुह्यमन्त्रस्तु सखार्य इमा रुद्राय इत्यपि ॥
मानो महान्त इत्योर्वोर् एष ते रुद्रेतिजानुनोः ।
अवरुद्रमिति स्रोतज्जङ्घयोर्मन्त्रमुच्चरेत् ॥
कवचे मध्यमेतर्हि तदुपरिस्थित इति ।
नेत्रस्तु नीलग्रीवाय प्रमुञ्च मनोऽष्टकम् ॥
य एतावन्त एतेन विदिक्षुदिक् प्रबन्धनम् ।
ॐमितिच नमस्कारभवा च ते ततः पुनः ॥
रुद्रायेति विधानज्ञो दशाक्षरन्तदा न्यसेत् ।
प्रणवं विन्यसेन्मूर्ध्नि नकारं नासिकान्तरे ॥
मोकारन्तु ललाटे तु भकारं मुखमध्यतः ।
गकारं कण्ठदेशे तु वकारं हृदये न्यसेत् ॥
तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत् ।
द्राकारं नाभिदेशे तु यकारं पादयोर्न्यसेत् ॥
त्रातारमिन्द्रं त्वन्नाग्ने सुगन्ध पन्थानमिति चापि ।
तन्त्वा यामि यदेदानो नियुद्भिरित्यपीरयेत् ॥
वयं सोम तमीशानं यस्मैरुद्रा इति स्मरेत् ।
स्योना पृथिवी चोतत् कुर्वीत सपुटं द्विजः ।
इन्द्रादिदिशांपालान् प्राच्यादिषु स्मरेदथ ॥
रौद्रीकरणमेतद्धि कृत्वा पार्श्वे प्रभुध्वरे ।
यक्षरक्षःपिशाचाद्याः प्रेतभूतग्रहादिकाः ॥
दुष्टदैत्याश्च शाकिन्यो दैत्यो स्त्रकाश्च याः ।
मिथ्यामाटचोऽरण्या देदुष्टस्थापदश्च निजाः । ॥
म्लेच्छवञ्चकचोराद्या यमदूतघटाकयः ।
रौद्रभूतमिमं सर्वे द्विजं पश्यन्ति षडिश्वरम् ॥

देदीप्यमानमर्चिर्भिर्दुष्टदृग्वधकारकः ।
दह्यमानो दवीयः स मृत्युधामसु धामभिः ॥
प्रपश्यन्ति हि ये दुष्टा द्विजास्ते रुद्ररूपिणम् ।
पञ्चास्यमैश्यमात्मान सर्वाभरणभूषितम् ॥
मृगलाञ्छनमूर्धान शुद्धस्फटिकसन्निभम् ।
फणारुद्रखविस्फूर्जदुरगेन्द्रोपवीतिनम् ॥
समार्चिष ज्वलज्ज्वाल जटाजूटकिरीटिनम् ।
सहस्रकरपादाब्जपङ्काङ्गविभूषितम् ॥
ब्रह्माण्डखण्डवक्रारं रुद्रपालकधारिणम् ।
देदीप्यमानचन्द्रार्कज्वलदग्निविनेत्रिणम् ॥
त्रैलोक्यज्योति कङ्कालसन्नग्नकपालमालिनम् ।
दीप्तनवरत्नमालाभरणमल्लाधरद्विज ॥
नि:शेषवारिसम्पूर्णं कमण्डलुधर ध्वजम् ।
जगत्व्याधिपक्षत्रादण्डमेककधारिणम् ॥
केयूरवद्धनागेन्द्रमूर्धमणि विराजितम् ।
विचित्र किङ्किणी माला मुक्ताराम विराजितम् ॥
घर्घराव्यक्तनिर्गच्छद्गम्भीरारावनूपुरम् ।
सहेमपट्टनीं लाभ व्याघ्रचर्मोत्तरीयकम् ॥
विद्युल्लताप्रभागङ्ग शुभ्रमूर्धसुरार्चितम् ।
समस्त भुवनाभाव धरणोच्छासनस्थितम् ॥
त्रैलोक्यवनितामूर्धानं तद्देहार्धस्थं पार्वतीम् ।
लक्षसूर्यप्रभाभास्वत् त्रैलोक्यक्षतपाण्डुरम् ॥
अमृतप्लुत दृष्टाङ्ग दिव्यभोगसमाकुलम् ।
दिग्दैवतैः समायुक्तं सुरासुरनमस्कृतम् ।

नित्यं शाश्वतमव्यक्तं व्यापिनं नन्दिनं ध्रुवम्॥
द्विजो ध्यात्वा यथात्मानं सम्यक् यत्स्वरूपिणम्।
सप्तपञ्चशान्ताराय: सनातीयजनमारभेत्॥
अनुलिप्ते सुपुष्पे च देशे गोचर्ममात्रके।
स्थण्डिलं ताम्रजमालिख्य मन्त्रै प्रक्षाल्य तु पुनः॥
तत्र पूजादिकं कुर्यान्नमश्च शाम्भवाय च।
मानो महान्त इति च सिद्धमन्त्रं स्मरेद्द्विजः।
स ललाटे पुनर्ध्यात्वा तेजोरूपं पुनर्द्विजः।
दशाक्षरेण मन्त्रेण दद्यात्पाद्यादिकौ पुनः॥
न्यासमन्त्रैश्च कोङ्कारैर्मानस्तोक इति स्मृपि।
शम्भवे इति मन्त्रेण दद्याद्गन्धोदकादिकम्॥
पुष्पधूपञ्च दीपादि यथालाभं निवेदिकम्।
दशाक्षरेण तेनैव ततः कुर्यात् पुनर्द्विजः॥
शिखा तस्य तु रुद्रस्योत्तरनारायण द्विजः।
शिरः पुरुषसूक्तञ्च शिवसङ्कल्पहृदयस्तत्॥
कवचञ्चाप्रतिरथं नेत्रविभ्राट् बृहत्पिबन्।
शतरुद्रीयमन्त्रेण देवस्यास्त्रं प्रकल्पयेत्॥
पञ्चाङ्गानि स्मरेद्दृष्टप्रथमं पूजयेद्द्विजः।
उत्कल्य यथावेनेश्च विकिरन्त्वेति विसर्जयेत्॥
रुद्ररूपो द्विजो यस्तु कुर्यात्तद्वित्त सिध्यति।
अक्षतान्वा तिलान्वापि यवान्वा समिधोऽपि वा॥
शम्भवे इति जुहुयात् सर्वांस्तानाज्यसिक्तकान्।
पञ्चपञ्चाय षड्वाय अष्टावष्टौ तथापि च॥
दशदशैकादश वा जुहुयात्साधको द्विजः।

द्विजः स्वदारसन्तुष्टः शुचिः स्नातो जितेन्द्रियः ॥
जपतर्पणहोमादौ रतो यो वत्सरं जपेत्।
दशानामश्वमेधानां फलं प्राप्नोति वै द्विजः ॥
सौवर्णं पृथिवीदानं पुण्यभावः प्रजायते।
महापापोपपापैश्च मुक्तो रुद्रत्वमृच्छति ॥
एकादशगणान् रुद्रानावर्त्य याति रुद्रताम्।
रुद्रजापी शुचिः पुण्यः पाङ्क्तेयः श्राद्धभुग्वरः ॥
वंशानां विंशतिस्त्रैकान्तारयेद्रुद्रजाप्यकृत्।
एकतो योगिनः सर्वे ज्ञातिभिः सह सद्व्रतैः ॥
एकतो रुद्रजापी तु मान्यः सर्वैस्तु दैवतैः।
पात्रमत्र पवित्रञ्च नाधिकं रुद्रजापिनः ॥
तस्मै दत्तं कृतमुक्तान्तदानन्त्याय कल्पते।
अथातः सिद्धिकामः सन् कन्दमूलफलाशनः ॥
गोमूत्रयावकक्षीरं दधिशाकान्नभोजनः।
हविष्यभोजनो वाक्षो विप्रायोत्पन्नभोजनः ॥
जपहोमादि कुर्वाणो यथोक्तफलभाग्भवेत्।
शिरः साध्य रुद्राणां जपैर्दशशतैर्ध्रुवम् ॥
सर्वे मन्त्रा भवन्त्यस्य ब्राह्मणस्योक्तकारिणः।
सिद्धमन्त्रा भवन्त्यस्य चिन्तितार्थफलप्रदाः ॥
रुद्रस्यैवास्य सर्वे ते भवन्तीश्वरनोदिताः।
एकादशशुभान् कुम्भानाहृत्य विधिसम्मितान् ॥
सहिरण्यान् सवस्त्रांश्च फलपुष्पोपशोभितान्।
गन्धोदकाक्षतैर्युक्तान्नमस्कृत्याऽभिमन्त्र्य च।
एकादशमहात्मानं मन्त्र वा हितकाम्यया।

तीक्ष्णतैलप्लुतं सम्यक् मन्त्रान्ते मोचनम् परम् ।
फट्कारेण च जुहुयात् तयोरेवाचिराद्भवेत् ॥
जलमध्ये शतावर्त्या सद्योऽरिर्निगद्यते ॥
नाभिमात्रे जले विप्रः प्रविश्य जुहुयाज्जलम् ।
कुर्यादेकार्णवां धात्रीं मन्त्रमाहात्म्यतो ध्रुवम् ॥
नमः स्वस्य इत्यनेन मन्त्रेण तु सहस्रकम् ।
लवणं मध्वाहुतीनान्तु राजा शीघ्रं वशी भवेत् ॥
द्विगुणाम्बलाशसमिधं महावाणी प्रजायते ।
त्रिगुणां नवपद्मानां पाताले सिद्ध्यति ध्रुवम् ॥
चतुर्गुणेन मन्त्रेण वरदा श्रीः प्रजायते ।
समुद्रगा नदीतीरे पुलिने वा पवित्रके ॥
षड्गोमरि श्रीफलानां कृत्वा त्रिगुणसहस्रकम् ।
अणिमादिकसिद्धीनामेभिरेव भवेद्द्विजः ॥
छन्दोदैवतमार्षेयमथातः शतरुद्रिये ।
ध्यानेन कर्मसम्पन्न द्विजानां येन जायते ॥
आद्यानुवाके रुद्राणां आद्यायाश्च क्वचिद्द्विजः ।
छन्दोगायत्र्यमन्यास्तु अनुष्टुप्‌तिसृषु स्मरेत् ॥
पङ्क्तिस्त्रिषु विज्ञेया अनुष्टुप् तिसृषु स्मृताः ।
द्वयोश्च जगती विप्र उक्तमथानुवाककम् ॥
आद्यानुवाके प्रथमा हृहती जगती तथा ।
*अनुष्टुप्‌ तृतीयाद्यां द्वयोस्त्रि ष्टुप्‌ स्मृता द्विज ! ॥*
अपरासु तथाऽनुष्टुप्सु अनुवाकद्वयं स्मृतम् ।
रुद्रः सर्वासु देवत्वं विनियोगो यथोचितः ॥
यज्ञयनादि पट्कैव शिवसंकल्पमार्षकम् ।

रुद्रस्तु देवता पट्सु विनियोगो जपादिषु ॥
अङ्गाः सम्मृत इत्यादौ उत्तरनारायणस्त्विषिः ।
पूर्वोनुवाके दैवत्यं अनुष्टुप्छन्दः प्रकीर्तितम् ॥
आशु शिशानि इत्यादिरप्रीतिरथ उच्यते ।
एतन्नाम्ना मुनिसत्र दैवताराम ईश्वरः ॥
दैवत्यमापतेत् सत्र छन्दस्त्रिष्टुप् प्रकीर्तितः ।
विभ्राट् बृहदित्यादौ सूर्यो दैवतमुच्यते ॥
एतत्सर्वं सकलं द्विजाग्र्यो रुद्राध्यक्षत् ।
यद्यदारभते तत्तद्यथोक्तफलदम्भवेत् ॥
तदा ध्यायन् यन्पितॄणां श्राद्धानान्ध्रविनाश च ।
प्रजानामायुषः कीर्तिभूयस्त्वं रुद्रजापिनः ॥
इम पुण्य पवित्रञ्च रहस्यं पापनाशनम् ।
रुद्रविधि विधिश्रेष्ठ । कुर्याद्विप्रः शिवे रत. ॥
कुर्याद्य एवं विधिवद्विधानं शम्भोरनस्वमयित द्विजेन्द्राः । ।
प्राप्नोति नाकं स शिवस्य साक्षादत्रापि स स्याच्छिववत्स पूज्यः॥
मन्त्राणि सर्वाणि च स द्विजस्य आदेशकार्याणि भवन्ति यस्य ।
यः साधयेत्प्रोक्तविधानयत्नो मन्त्राभिपूज्य स तु शम्भुवत्स्यात् ॥
इति श्रीबृहत्पाराशरीये शान्त्यध्याये रुद्रशान्तिः समाप्ता।

---

मन्त्रन्तिनेतं जुहुयाद्धुताशे योविल्वपत्रैर्घृतदुग्धयुक्तैः ।
मृत्युञ्च हत्वा श्रियमेव ध्यात्वा प्राप्नोति पश्चाच्छिवलोकमेव ॥
पञ्चभागास्तथा पञ्च पञ्चेन्द्रा पञ्चवारुणाम् ।
षष्ठाहृतीर्जपित्वाथ सर्वपापैः प्रमुच्यते ॥

अथातः सम्प्रवक्ष्यामि तटागेष्टिविधिं शुभम् ।
येन कृतेन तेषान्तु प्रतिष्ठा सा प्रजायते ॥
अस्मात्तातस्य तातेन पृच्छति रघुपुङ्गवे ।
तटागाद्युत्सवविधिः प्रोक्तो सोऽयं प्रकीर्तितः ॥
दीर्घिकासु तटागेषु संस्थितासु त्रयो विधिः ।
वशिष्ठः प्रोक्तवान् सम्यक् दशरथस्य पृच्छतः ॥
तस्माद्यः स्तुतवान् शक्तिसूनवेऽसौ पराशरः ।
तत्प्रसादेन तत्प्रोक्तो योविधिः संप्रचक्षते ॥
तटागादिनिपातानां यावदुत्सर्जनं कृतम् ॥
तावन्न परकीयन्तु स्नानादीनामनर्हकम् ।
अप्रतिष्ठितदेवानां न कार्यं पूजनं यथा ॥
अप्रतिष्ठितपायानां प्रोक्तन्तोयमपेयवत् ।
तदुत्सर्गः प्रकर्तव्यो निजवित्तानुसारतः ॥
वित्तशाठ्यं नहेयं स्यादित्यब्रवीत्पराशरः ।
तद्विधिज्ञः शुचिः शान्तो ब्राह्मणो धर्मवित्तमः ॥
तत्कृत्यर्थं वरेण्योऽसौ चतुर्भिर्ब्राह्मणैः सह ।
सतोयं न तु कर्त्तव्यः प्रतिधर्मविदृक्षये ॥
विपरीतमतिर्यः स्यात् तत्कृतं कर्म निष्फलम् ।
तटागपालिपृष्ठेतु मण्डपं तत्र कारयेत् ॥
पूर्व्वोत्तरप्लवे देशे शुभे शौचसमाहितः ।
चतुरस्रं चतुर्द्वारं दशहस्तप्रमाणतः ॥
सार्द्धहस्तप्रमाणेन तोरणानि तु कारयेत् ।
कार्य्याः विचित्राः पताका नानावर्णाः समन्ततः ॥

शुभपल्लवसंयुक्ता द्वारेषु कलशाः स्मृताः।
यथावर्णं यथाकाष्ठं यथाकार्य्यं प्रमाणतः॥
तथा यूपान् प्रवक्ष्यामि सर्वेषां हितकाम्यया।
पालाशो ब्राह्मणस्योक्तो न्यग्रोधः क्षत्रियस्य च॥
वैल्वो वैश्यस्य यूपः स्याच्छूद्रस्योदुम्बरः स्मृतः।
शिरः प्रमाणं विप्रस्य स्याक्कण्ठ क्षत्रियस्य च॥
उरःप्रमाणं वैश्यस्य शूद्रस्य नाभिमात्रकम्।
पूर्वस्य दक्षिणे भागे तोरणं तत्र कारयेत्॥
ब्रह्मस्थानञ्च तन्मध्ये अष्टौ भागाः प्रकीर्त्तिताः।
तेषामुत्तरतः सोम कुवेर कुविदङ्गतम्॥
धनदं धननागेति दूर्वावास्येति शङ्करम्।
आकृष्टेनेत्यादिमन्त्रैश्च स्वैः स्वैः कल्पास्तथा ग्रहाः॥
त्रातारमिन्द्रमितीन्द्र अग्निदं ते च पावकम्।
'अग्निरायुरित्यादि धर्मविञ्च द्विजोत्तमः॥
तद्विष्णोरिति वै विष्णु नमः सूरेति नैरृतम्।
सप्त ऋषय इत्यादि मन्त्रेण सप्त ऋषिस्तथा॥
वरुणस्योत्तम्भनमसि वरुणन्तु प्रकल्पयेत्।
एतद्वा विंशतिः स्थाना निमन्त्रिताः पृथक् पृथक्॥
इमं मे त्वन्नस्तन स्तत्वायामि त्वनुत्तमम्।
*समुद्रोऽसि समुद्रेति सौन् समुद्रानिति त्वसि॥*
इयवारुणमन्त्रैस्तु आहुतीना शतद्वयम्।
सहस्रशतं शतं वापि विशमष्टोत्तर शतम्॥
गोसहस्रशतं वापि शतार्द्धं वा प्रदीयते।
अलाभे चैव गा दद्यादेकामपि पयस्विनीम्॥

अरोगां वत्ससंयुक्तां सुरूपां भूषणान्विताम् ।
सौवर्णराजतास्ताम्राः कार्य्याः मीनाश्च शक्तितः ॥
मत्स्यनक्रादयः कार्य्याः विविधाः पूर्व्वहृद्ये ।
गोवत्सौ वत्सवर्ण्णौ च आग्नेय्यां दिशि संस्थितौ ॥
वायव्याभिमुखौ तत्र तारयेद्दरिमध्यतः ।
वस्त्ररत्नानि तैः स्थाप्य छत्रिकामुद्रिकां शुभाम् ॥
शक्त्यान्वितैः प्रदातव्य विप्रान् प्रसाद्य भक्तितः ।
दध्यादिभेभ्यः सन्तोष्य कृतोपानहमेव च ॥
सुहेम पुष्पसंयुक्ता शय्या देयाश्च शक्तितः ।
आसनानि च शस्तानि भाजनानि निवेदयेत् ॥
एतत्प्रदक्षिणीकृत्य स्वात्मना च विपश्चितः ।
प्रसादयेद्द्विजान् भक्त्या इष्टापूर्त्तं फलं नरः ॥
कृताञ्जलिपुटो भूत्वा विप्राणामग्रतः स्थितः ।
ब्रूयादेवं भवन्तोऽत्र सर्व्वे विप्रपुरन्दराः ॥
तद्यूयन्तारयध्वं मां संसारार्णवतो द्विजाः । ॥
आगता मम पुण्येन पूर्व्वपुण्यप्रसाधकाः ।
कूर्म्मश्च मकराश्चैव सौवर्ण्णं तत्र कारयेत् ॥
मीनश्च राजतश्चैव ताम्रदर्दुरकाः स्मृताः ।
जलकुम्भचराद्याश्च सैन्धवास्तत्र प्रकल्पयेत् ।
अन्ये च जलजास्तत्र शक्त्या ताम्रान् प्रकल्पयेत् ॥
इमं सुपुण्यं पवित्रञ्च तटाकादिविधिं नरः ।
खातयित्वा तटागानि स्वभावात् सप्तवर्जिताः ॥
मानव क्रीडते स्वर्गे यावदिन्द्राश्चतुर्दश ।
एतद्विधानं विदधाति भक्त्या सर्वेषु स्थानेषु तडागकेषु ।

सर्वैश्च कामैः परिपूर्णदेहो भुङ्क्ते धरित्र्यामपि सर्वभोगान् ॥
वेदाग्नि केचित् वरुणस्य लोके प्रयाति लोकान् वरुणस्य कुम्भे।
सपूज्यते तत्र पुनर्धरित्र्या नृपेन्द्रतामेति पराशरोक्तिः ॥

इति श्रीबृहत्पाराशरीये धर्मशास्त्रे वापीकूपतटागादि शान्तिविधिः समाप्तः।

---

अथातः सम्प्रवक्ष्यामि नरेन्द्राः। श्रूयतामयम्।
लक्षहोमविधिः पुण्यः कोटिहोमविधिस्तथा ॥
स्वयम्भूर्यमुवाच प्राक् ब्रह्मा लोकपितामहः।
तमिमं संप्रवक्ष्यामि श्रूयतां पापनाशनम् ॥
ये वेदब्राह्मणाः कार्य्या भूमिर्यावत्तु मण्डपम्।
समिधो याश्च मन्त्राश्च अन्यच्च तत्र यद्भवेत् ॥
लक्षहोमविधिं विप्राः कथ्यमानं निबोधत।
कुम्भाश्च ऋत्विजः कार्य्या ब्राह्मणा ये विपश्चितः ॥
नियमव्रतसम्पन्ना सहिताः पार्थिवेन तु।
नित्यं अपपराश्चैव नियोज्यास्तादृशा द्विजाः ॥
कन्दमूलफलाहारा दुग्धक्षीराशिनोऽपि वा।
प्रागुदक् पूर्वदेशेषु समे स्थण्डिल एव च ॥
तत्र वेदिं च कुर्वीत पञ्चहस्तसमन्वितम्।
दक्षिणोत्तरं आयामे त्रिंशत्तु पूर्वपश्चिमे ॥
कुण्डानि खनितव्यानि अङ्गुल्या नैकविंशतिम्।
निधापयेद्धिरण्यञ्च रत्नानि विविधानि च ॥
सिकता परिदेया च तत्राग्निं संमिन्धयेत्।
आज्यभागाहुतीर्हुत्वा न वाङ्गत्या च संमभेत् ॥

अग्निं सोमञ्च सूर्यञ्च विष्णुञ्चैव प्रजापतिम् ।
विश्वेदेवान् महेन्द्रञ्च मित्रं स्विष्टिकृतं तथा ॥
दधिमधुघृताक्तानां समिधाञ्चैव यज्ञिनाम् ।
होमयेच्च सहस्रञ्च तत्र चैव यथाक्रमम् ॥
चतुर्विंशति गायत्र्या मानस्तोकेति पङ्क्ति तथा ।
विंशत्यष्टाभिमन्त्रैश्च चत्वारि विष्णुदैवतैः ॥
कुष्माण्डैर्जुहुयात्तत्र विकिरेद्वाथ षोडश ।
जुहुयाद्दशसहस्राणि जातवेदस इत्यृचे ॥
पञ्चसहस्राणि जुहुयात् जुहुयादिन्द्रदैवतैः ।
कृते शतसहस्रे तु अभिषेकन्तु कारयेत् ॥
दृष्टाभिषेकं यत्प्रोक्तं तदत्रापि शुभप्रदम् ॥
अथवा षोडशं कुम्भं सहिरण्यैः समङ्गलैः ।
सर्वौषधिसमायुक्तैः सर्वरत्नविभूषितैः ॥
अभिषेकं ततस्तस्मिन् प्रवाला दक्षिणा स्मृता ।
हयाश्वरथयानानि भूमिवस्त्रे युगानि च ॥
अजश्च गोशतं हेम ऋत्विजाञ्चैव दक्षिणाम् ।
हयानेकादशैवाथ दश दद्याच्च धेनवः ॥
अशक्त्या वा प्रदद्याद्गां वित्तशाठ्यं विवर्जयेत् ।
एवं कृते तु यत्किञ्चिद् ग्रहपीडासमुद्भवम् ॥
भौममाकाशजं वापि असद्वा यदि जायते ।
तत्सर्वं लक्षहोमेन प्रशमं यात्यसंशयम् ॥
शान्तिर्भवति पुष्टिश्च वर्द्धते तेजः प्रवर्द्धते ।
दृष्टिर्भवति राष्ट्रे च सर्वोपद्रवसङ्क्षयः ॥
इति श्रीहरत्यारायणीये लक्षहोमविधिः सम्पूर्णः ॥

अथातः सम्प्रवक्ष्यामि कोटिहोमविधिं द्विजाः!।
श्रूयतामादरेणाय सर्वकामफलप्रदः॥
सानुष्ठानाद्विजाः प्रोक्ता ऋत्विजा यागकर्मणि।
विधिज्ञाश्चैव मन्त्रज्ञाः सदाचारनिरताश्च ये।
कार्यश्चैव विशेषेण ग्रहयागं विधिविंदः॥
एकाङ्गविकलं विप्रो धनधान्यापहारकः।
सर्वाङ्गविकलो यस्तु यजमानं स हिंसति॥
वर्ज्यः सर्वप्रयत्नेन विधिमन्त्रविदूद्विज।
कार्यश्चैव विशेषेण ग्रहयज्ञश्च विदुद्विजैः॥
ग्रहा फलन्तु साङ्गाय सुराश्चैव नरेश्वराः।
अघोर्ध्वं येन मन्त्राणां कृत्वा चाष्टोत्तरं शतम्॥
स एव ऋत्विक्विज्ञेय सर्वकामफलप्रदः।
आवाहनीयो यत्नेन प्रणिपत्य मुहुर्मुहुः॥
एवं कृते तु यत्किञ्चिद्ग्रहपीडासमुद्भवम्।
तत्सर्वं नाशयेत्येव स्वप्नं सोऽहं यथा॥
अस्माच्छतगुण प्रोक्तः कोटिहोमे स्वयम्भुवा।
आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च॥
पूर्ववद्ग्रहदेवानामावाहनविसर्जने।
होममन्त्रास्त एवोक्ता स्नानदानं तथैव च॥
मण्डपं चैव वेद्याय विशेषश्च निबोधत।
कोटिहोमे चतुर्हस्तं चतुर्हस्तायतं पुनः॥
योनिवक्त्रद्वयोपेतं तदप्याङ्कश्रिमेखलम्।
ह्यङ्गुलोद्गतकार्याच प्रथमा मेखला बुधैः॥
त्र्यङ्गुलैरुद्गतास्तद्वद् द्वितीया मेखला स्मृता।

द्वारे वैष्णवा या तु तृतीया चतुरङ्गुला ॥
द्व्यङ्गुलस्तत्र विस्तारः पूर्वयोरेव शस्यते ।
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता ॥
कूर्मपृष्ठोन्नता मध्ये पार्श्वतश्चाङ्गुलोन्नता ।
गजोष्ठसदृशा तद्वदायामा छिद्रसंयुता ॥
एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते ।
मेखलोपरि सर्वत्र अश्वत्थपत्रसन्निभाम् ॥
वेदीच कोटिहोमे स्यात्मण्डपस्य चतुर्मुखे ।
पूर्वद्वारेऽपि संस्थाप्य बह्वृचं वेदपारगम् ॥
यजुर्वेदं तथा याम्ये पश्चिमे सामवेदिनम् ।
अथर्ववेदं तद्वच्च उत्तरे स्थापयेद्बुधः ॥
अष्टौ तु होमकाः कार्या वेदवेदाङ्गवेदिनः ।
एवं द्वादशविप्रास्तु वस्त्रमाल्यानुलेपनैः ॥
पूर्ववत् पूजयेद्भक्त्या सर्वाभरणभूषितैः ।
रात्रिसूक्तञ्च रौद्रञ्च पावमानञ्च मङ्गलम् ॥
पूर्वतो बह्वृचः शान्तिं पठमानोह्युदङ्मुखम् ।
शाक्तं रौद्रञ्च सौम्यञ्च कूष्माण्डं शान्तिमेव च ॥
पाठयेद्दक्षिणे द्वारे यजुर्वेदिनमुत्तमम् ।
सौवर्णमथ वै राज्यं माग्नेयीं रुद्रसंहिताम् ॥
ज्येष्ठसामन्तथा शान्तिं छन्दोगं पश्चिमे जपेत् ।
पञ्चभिः सप्तभिर्वापि होमः कार्यश्च पूर्ववत् ॥
स्नाने दाने च मन्त्राः स्युस्त एव द्विजसत्तमाः ।
वसोर्धाराविधानञ्च लक्षहोमवदिष्यते ॥
अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।

सर्वान् कामानवाप्नोति ततो विष्णुपुरं व्रजेत् ॥
य पठेत् शृणुयाद्वापि ग्रहयागमिमं नरः ।
सर्वपापविशुद्धात्मा पदमैन्द्रं स गच्छति ॥
अश्वमेधसहस्राणां दश चाष्टौ च धर्मवित् ।
कृत्वा यत् फलमाप्नोति कोटिहोमात्तदश्नुते ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च ।
नश्यन्ति कोटिहोमेन स्वयम्भूवचनं यथा ॥
प्रपेदिरे तस्य पितामहाद्याः शुभेषु पापेन गरीयसा तान् ।
उद्धृत्य नाके स नयेद्धि सर्वान्यो लक्षहोमे नृपतीरतः स्यात् ॥
राष्ट्रं मनोवाञ्छितदृष्टियुक्तं धान्यैश्च रत्नैः पशुभिः समेतम् ।
निर्द्वन्द्वनीरोगमदस्तु तस्माद्यो लक्षकोटीहवनं विदध्यात् ॥
यो लक्षहोमं विदधाति भूभृत् तदयुतलक्षशतहोमकः स्यात् ।
प्रत्यब्दमाप्नोति स दीर्घमायुर्भुङ्क्ते सपत्नान् विजये धरित्रीम् ॥
यो ब्रह्मघाती गुरुदारगोऽपि ग्रामाविदाहोङ्कपापयुक्तः ।
राजा स मुक्तः शतलक्षहोमान्निःशेषपापैर्विबुधत्वमेति ॥
तस्मात्सदा भूपतयो विदध्युर्वृष्ट्यै प्रजासौख्यबलस्य पुष्ट्यै ।
आयुःप्रवृद्धौ विजयाय कीर्त्यै लक्षसहोमे ग्रहयोगमेतम् ॥
इति श्रीहेमाद्रिविरचिते कोटिहोमः सम्पूर्णः ॥

---

यो अन्यत्प्रवक्ष्यामि विधिम्पावनमुत्तमम् ।
स्मात्तातप्रतातोऽस्य रघुपुत्राय धीमते ॥
नपत्यस्य पुत्रार्थं कुर्याद्धेमाण्डकं स्वयम् ।
रवगीर्षसूक्तस्य विधानस्वपाककम् ॥

येयैः कृतं नृपैः पूर्वं रन्यैरपि द्विजोत्तमैः ।
उपासितन्तु सद्भक्त्या श्रोत्रियैर्वेदपारगैः ॥
आत्मविद्भिर्निराहारै र्मौनिभि र्मन्त्रतत्परैः ।
क्रियमाणाः क्रियाः सर्वाः सिध्यन्ति व्रतचारिभिः ॥
न पाठान्न धनात् स्नानात् नालन्न प्रतिपादनात् ।
प्रेक्षस्य कर्मणः पुरा सर्वा भवन्ति सिद्धयः ॥
शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे ।
द्वादश्यां पुत्रकामाय संकुर्वन्ति च वैष्णवम् ॥
दम्पत्योरुपवासञ्च लोक दृश्य सुरालये ।
ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥
चरुं पुरुषसूक्तेन अर्पयेत् पुत्रकाम्यया ।
प्राप्नुयाद्वैष्णव पुत्रं चिरायुः सन्ततिक्षमम् ॥
द्वादश्यां द्वादश सम्यग् विधिवन्निर्वपेच्चरून् ।
यः करोति द्रुतं याति स विष्णोः परमं पदम् ॥
स्नात्वाच विधिवत्पूर्वं ऋग्भिः षोडशभिस्तथा ।
अभिधोऽखत्यश्चस्य स्नात्वाच जुहुयात् पुनः ॥
उपस्थानं ततः कुर्य्यात् ध्यात्वाच मधुसूदनम् ।
हविर्होमं पुनः कृत्वा जुहुन्मन्त्र घृताहुतीः ॥
हविःशेषं नमस्कृत्य नारी नारायणं पतिम् ।
संप्राश्य च हविःशेषं लभ्यमीत वसेद्गृहे ॥
ततः कृत्वा इदं कर्म भोजयेद्द्विजतर्पणम् ।
रजः स्त्रीषु निवर्तेत यावद्गर्भं न विन्दति ॥
चतुरा शतपुत्रा वा यावत्कन्या प्रसूयते ।
क्षिप्रं सा जनयेत् पुत्रं पराशरवचो यथा ॥

होमान्ते दक्षिणान्दद्यात् धेनु वासस्तथा तिलान्।
भूमिं हिरण्यं वस्त्राणि यथासम्भवमेव वा॥
यः सिद्धमन्त्रः सतत द्विजेन्द्रः सपूज्य विष्णुं विधिवत्सुतीर्थे।
इम विधान विदधाति सम्यक् स पुत्रमाप्नोति हरे प्रसादात्॥
इति श्रीबृहत्पाराशरीये शान्त्यध्याये पुत्रकामोऽयं पुरुषसूक्तविधिः सम्पूर्णः॥

अथात सम्प्रवक्ष्यामि ग्रहमन्त्रोऽधिदैवतम्।
आर्षच्छन्दश्च यज्ज्ञानात्कर्म स्यात्समलङ्कृतम्॥
आकृष्णेनेति मन्त्रोऽस्मिन्देवत्य सविता मतः।
ऋषिर्हिरण्यरूपाख्य त्रिष्टुप्छन्दः प्रकीर्तितम्॥
आप्यायस्वेति सोमोऽत्र दैवत गौतमो मुनि।
गायत्रीच्छन्द उद्दिष्टं विनियोगो यथोदितम्॥
अग्निमूर्द्धेति मन्त्रोऽत्र दैवता भौममुच्यते।
विरूपाख्यो मुनिर्धीमान् छन्दोगायत्य मिष्यते॥
उद्बुध्यस्वेति मन्त्रस्य बुधश्चैव तु दैवतम्।
मुनिर्बुधश्च मन्त्रस्य त्रिष्टुप्छन्द प्रकीर्तितम्॥
शुक्रमिति चोत्यत्र शुक्र इत्यधिदैवतम्।
शुक्रस्यापि तथार्षञ्च विराट्छन्दः प्रकीर्तितम्॥
शन्नो देवीतिचेत्यत्र शनिदैवत मुच्यते।
सिन्धुर्नाम मुनिर्विद्वान् छन्दोगायत्य मुच्यते॥
काण्डात्काण्डादितिर्मन्त्रस्य राहुदैवत मुच्यते।
ऋषि प्रजापतिः प्रोक्तोऽनुष्टुप्छन्दः प्रकीर्तितम्॥
केतु कृण्वन्निति प्रोक्ता दैवत केतुरेव हि।
मधुच्छन्दस आर्षञ्च गायत्य छन्द एव हि॥

स्योना पृथिवीत्यत्र स्कान्दस्य देवता स्मृता।
इन्द्रकुक्षेति दैवत्य मिन्द्र एव स्मृतो बुधैः॥
आर्षन्तत्स्यस्य चापुंव स्त्रिष्टुप्छन्दः प्रकीर्तितम्।
यश्मिन्नृचेति सौत्यत्र यमोवै दैवता परा॥
ऋषिस्तु कुत्सो नाम छन्दोऽनुष्टुप् स्मरेद्बुध ।
वह्नाजन्नमित्यत्र च कामो दैवतकं सदृत्॥
सुनिर्ममानतुर्नाम त्रष्टुप्छन्दो विधीयते ।
आयाते मेतिच त्वष्टा चित्रगुप्तस्य दैवतम्॥
आर्षन्तु वामदेवस्य त्रिष्टुप्छन्दो ह्यथो बुधैः ।
अग्निं दूतमितिह्य स्यादग्निर्वै देवता स्मृता॥
आर्षं मेधातिथेरत्र च्छन्दोगायत्र्यमेव हि ।
अस्मस्तु सोम इत्यत्र सोमं वैदैवतं स्मरेत्॥
मेधातिथिर्हिद्धापर्को‌ऽनुष्टुप्छन्दश्च उच्यते ।
भूतिपृथिव्यन्तरिच मित्यत्र दैवत चितिः॥
ऋषिः शातातपः ख्यात्वा छन्दश्चानुष्टुकुदुच्यते ।
पुरुषसूक्तस्य दैवत्य पुरुषेच हित बुधैः॥
आर्षं नारायणस्येह छन्दस्यानुष्टुबित्यपि ।
इन्द्रोपिन्द्रो मरुत्वन्तो मरुत्वान्दैवत मदृत्॥
आर्षन्तु काश्यपस्येह गायत्र्यच्छन्दएव हि ।
मरुत्वनित्यत्रबुधै. सुरेन्द्रो देवता मता॥
यद्वापि काश्यपस्यार्षं गायत्र्यच्छन्दएव हि ।
उत्तानपर्णे मित्यत्र इन्द्रो दैवत मुच्यते॥
आर्षं साद्धस्य चैवोक्तम् अनुष्टुप्छन्द इत्यपि ।
प्रजापते इति ह्यत्र देवता च प्रजापतिः॥

हिरण्यगर्भस्यार्षन्तु त्रिष्टुप्छन्दो मतं बुधैः।
आय गौरिति चास्य देवता पूजने मता॥
सर्पराज्ञमुनिश्चात्र गायत्र्यं च्छन्द इष्यते।
एष ब्रह्मा ऋत्विज इति ब्रह्मद्विपोऽधिदैवतम्॥
ऋषिर्वै वामदेवोऽत्र गायत्र्यच्छन्द इष्यते।
आत्वन्न इन्द्रवृत्रहन् सुरेन्द्र शर्मणेश्वरः॥
वामदेवोऽस्य आर्षं गायत्र्यच्छन्द इत्यपि।
जातवेदस इत्यत्र जातवेदास्तु दैवतम्॥
काश्यपस्यार्षमत्रापि च्छन्दोऽनुष्टुप् प्रकीर्तितम्।
आनोनियुद्भिरित्यस्मिन् वायु दैवतमुच्यते॥
आर्षेऽत्र वसिष्ठस्य अनुष्टुप्छन्द एव हि।
नमः प्रजापते वत्यं मुनिप्रोक्तं प्रजापतिः॥
गायत्र्यं च्छन्दसाश्वर विनियोगो यथोचितम्।
ईषो ऊर्जेति चात्राश्विनौ दैवते स्मरेत्॥
प्रस्कण्वस्यार्षमत्रापि गायत्र्यच्छन्द उत्तमम्।
मरुतो यस्य हित्यस्य मरुद्दैवत मुच्यते॥
गौतमस्य मुनिविद्वन् च्छन्दस, प्रथम सुने।
दैवत्यं सार्षं सच्छन्दसा यो मत्वाहिजाग्रक्रतो विधानम्।
वेदोक्तमर्थं लभतेस सर्वं सम्यक्फलं कर्म्मुनिराप्यसुत्र॥
यो लक्षहोमं त्वयुतं कोटिहोमं राजा विदध्यात्प्रतिवर्षमेकम्।
राष्ट्रे सुवृष्टिर्विजयः सुभिक्षमारोग्यता स्यात् सुकृतस्य वृद्धिः॥
भवन्ति पुत्राः शुभसन्ततिश्च समाधिरायुर्यो राजपिता धरित्र्याम्।
सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रविचन्द्रतुल्याः॥
इति श्रीबृहत्पाराशरीये शान्तिविधिर्नाम नवमोऽध्यायः।

## दशमोऽध्यायः।

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया।
पराशरोदितं विप्रा! वक्ष्यमाणं निबोधत॥
नृपश्च भूमा परो देवपूज्योऽसौ नरदेवक।
स विधाता च सर्वस्य रचिता शासितापि च॥
इन्द्रादियमवित्तेशवारीशमातरिश्वनः।
शीतांशुस्तीव्रभासश्च ब्रह्मादयो द्विजो नृप॥
नृपो वेधा नृपः शम्भु र्नृपोऽर्को विष्टरश्रवाः।
दाता हर्त्ता नृप कर्त्ता नृणां कर्मानुसारतः॥
नापश्येद्यदि राजानं दण्डं नाप्याचरिष्यतः।
नामास्था समेष्यतिच नाभविष्यज्जगत्स्थिति॥
नार्चयिष्यन् पुरोडाशानमनुष्यपितृदेवताः।
नाभविष्यत् स्वकाकानां भागधेय हुतं हविः॥
विगुणोऽपि यथा पूज्य स्त्रियाश्च सत्पतिर्भवेत्।
तथा राजा प्रजानान्तु पूज्यः स्याद्विगुणोऽपि सन्॥
स्वधर्मस्थान् नृपो लोकाननन्यान् पुत्रानिवौरसान्।
शास्त्यं धर्मविदो दण्ड मधर्मकारिणश्च तान्॥
दण्डधृतो नरान् कुर्य्याद्धर्मज्ञानार्थसाधकान्।
समर्थानश्वपत्यादौ शूरान् स्वामिहितोद्यतान्॥
शुचीन् प्राज्ञाय धर्मज्ञान् विप्रान् मुद्राकरान्वितान्।
लेपकानपि कायस्थान् लेख्यकृत्तु हितैषिणः॥
अमात्यान्मन्त्रिणो दूतान्ययोदितपुरोहितान्।
प्राड्विवाकं समस्तान्वा हिताय रचनानपि॥

शूरानथ शुचीन् प्राज्ञान् परिविश्वासकारिणः।
सर्व्वस्थानेषु चाध्यक्षं सत्कृत्य वेदिनोऽपरे ॥
सदायत्तं कुमाराणां अन्तःपुरपलक्षणम्।
वृद्धानशुचिनीर्णविप्रां श्चशुचीननघान्न भीरुकान्।
यथोदितानि दुर्गाणि कुर्य्युस्ते परिरक्षणम् ॥
वहाहमुदितं स्त्रीणां यौवने बन्धुकारणात्।
पुरस्कृत्य च विज्ञान मात्मरक्षा च यत्नतः ॥
प्रातः सन्ध्यार्चनादूर्द्धं शुडं पुंसवनं स्मृतम्।
यथोक्तकार्य्यं शास्त्रे च नित्य कुर्य्यात् परीक्षणम् ॥
कोशेभाश्वरथादीना हेतीनां वर्मणामपि।
कुर्य्याच्च दर्शन नित्य मतन्द्रितो महीपतिः ॥
स्नानात्मनत्वयोर्मूर्णां सन्मन्त्रं नित्ययोऽपि च।
वेदार्थश्च सदा होमशान्तिश्च वृद्धसेवनम् ॥
यज्ञदानं तयोत्पातं समये शान्तयोऽपि च।
वर्जन विषयासक्तो भूमिदानस्य शासनम् ॥
षड्विवर्जितदेशे तु नीतिज्ञो मन्त्रकङ्क्षयेत्।
नित्यमुत्साहयुक्तः स्याद् विजिगीषु सदायुधः ॥
सदालङ्कारयुक्तश्च सदैव प्रियवाक्चयः।
सदाभियाहिने युक्तः पूज्यो नाकेऽप्यसौ नृपः।
सदा साधुषु सन्मानं विपरीतेषु घातनम्।
दण्ड दण्ड्येषु कुर्वाणो राजेष्टफलमश्नुते ॥
वृद्धान् साधून् द्विजान् मौलान् यो न सन्मानयेन्नृपः।
पिण्ड कुर्व्वीत नामीषा भूस्तत् चिप्र क्षयं व्रजेत् ॥
यस्तु सन्मानयेदेतान् नित्यं विप्रांश्च पूजयेत्।

पराजयेत सोऽरातीनजेयोऽप्यपि जायते ॥
पीड्यमाना प्रजा रक्षेत् कायस्थैश्चोरतस्करैः।
धान्येनुदृषतोयैश्च संपन्न परमण्डलम् ॥
हीनवाहनपुर्स्कांन्तु मत्वा तत्राविशेन्नृपः।
मासे सहसि यात्रार्थं कृतपुण्यः सोपवान् ॥
विधिवद्दूयानकं कुर्य्यात् सहाहे रचयेद्बलम्।
यत्राचलसरोरचा हयरथानु यच तु ॥
वासं तत्र विधायैव रात्रौ रक्षेद्बन स्वकम्।
चतुर्दिक्षु च सैन्यस्य शूरान्धनुर्धरान्विधि ॥
स्वयं राजा नियुञ्जीत समीक्ष्य स्वबलाबलम्।
राज्यस्य षड्गुणान् मत्वा सन्धिविग्रहयानकान् ॥
आसन सश्रयं द्वैध सम्यक्ज्ञात्वा समाचरेत्।
निर्भेद स्वबल कुर्य्यात् हन्याद्भिन्नचेतसा ॥
दासीकर्मकरान् दासान् भिद्यन्ते न यथेन्नृपः।
निकटस्थायिनो नित्यं जानन्ति चेष्टित प्रभोः ॥
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी।
ये ते परस्य यत्नेन भेदनीयास्ततोऽपरे ॥
यथा परो न जानाति तथा भेद समाचरेत्।
परमात्मविधानाना व्यलीककृतमन्दितम् ॥
छत्रापयेत् स्वसेनाया स्यायताचित्तभेदिन.।
परसैन्ये वहून् पातान् विविधान् कुहकानपि ॥
करीषाङ्गरदानादि वह्निपातानानेकशः।
स्वसैन्येऽभवदित्यादि नृपो यत्नेन रक्षयेत् ॥
नियुज्य यत्नद्बुरूपान् तत्र सर्वं निग्रामयेत् ॥

अन्तर्भीरून् बहिः शूरान् साग्निकान् ब्राह्मणोत्तमान्।
धर्मज्ञान् कुलसम्भूतान् विदध्यादात्मसन्निधौ॥
प्रविशेत्परदेशे तु प्रजां सौख्ये संविशेत्।
उत्साद्यं मार्गगो दूरीकृत्वापि मार्गतो व्रजेत्॥
शस्यानि दाहयेत्सर्वं सयवानि वनानि च।
भिन्द्यात्सर्वं निपानानि प्राकारं परिखां तथा॥
अपसृत्युमुपादाय भूमिसाधारणं पुनः।
गमयेद्वार्षिकान् मासानसौ च वसुधाधिपः॥
न युद्धमाश्रयेत् प्राज्ञो न कुर्यात् स्वबलक्षयम्।
न प्रभेदेन दानेन त्रिभिरेव वशं नयेत्॥
वदन्ति सर्वनीतिज्ञा दण्डस्यागतिका गतिः।
तद्वशं यममायाति यथा रिपुस्तथा चरेत्॥
आक्रान्ता दर्भसूच्योऽपि विद्युद्दम्भोपपातनम्।
न तापित शुक्ले च शुद्धसिद्धौ चरसिद्धिवत्॥
स स्वस्थात्यधिके देशे युद्धमिच्छेत् स्वधर्मवित्।
ततः प्रविश्य तद्दूरं भूमियुद्धं समारभेत्॥
किंचित् सुभेषु लोकेषु चपायां यद्वसुगृह्णेत्।
संत्रीरयामसौवापि पीडयेत्परसैन्यकम्॥

हीन परबलं मत्वा निरुत्साहमनादरम् ।
समस्तबलसयुक्त स्वयमुत्थाप्य योधयेत् ॥
न हन्यात् मुक्तकेशन्तु नाशयेन्न निरायुधम् ।
पराङ्मुखञ्च प्रहतं न तवास्मीति वादिनम् ॥
अन्यानपि च विद्वांश्च न हन्यात् धर्मयुद्धतः ।
हन्याच्चेन्नरक याति भ्रूणहत्यासमेनसा ॥
पराङ्मुखीकृते सैन्ये यो युद्धान्न निवर्त्तते ।
तत्पदानीष्टितुल्यानि भूत्यर्थमेकचेतसः ॥
शिरोऽहतस्य ये वक्रे विशन्ति रक्तबिन्दव. ।
सोमपानेन तत्तुल्या इति वासिष्ठोऽब्रवीत् ॥
युध्यन्ते भूभृतो येच भूम्यर्थ मेकचेतसः ।
इष्टैस्तैर्बहुभिर्योगैरेव यान्ति त्रिविष्टपम् ॥
येषु एवापरो धर्मो नृपतेर्यद्रणार्जितम् ।
वित्तन्दीयेत विप्रे स्यात् प्रजाभ्यश्चाभयं सदा ॥
तदा तु वशता याति स देशो न्यायतोऽर्जित ।
तद्व्यवहारेण यथावत्परिपालयेत् ॥
रणार्जितेन वित्तेन् राजा कुर्य्यान्नमस्यान् द्विजान् ।
अर्चयेद्विविधविहितान् सतान् सन्मानयेदपि ॥
मातुल, श्वशुरो बन्धु र्न्यो वापिच यो जित ।
अदण्ड्य: कोऽपि नो राजा राजनीतिविदो विदु ॥
सुसम्हायमग्रपाद शूर महानुरागदम् ।
सोत्साहं विजिगीषुश्च भूभृन् चिरं निवेदयेत् ॥
मत्वाचार्य्यवत. सर्वान् नियुक्तार्थनियुग्भवेत् ।

सार्थकांश्चैव युञ्जीत सर्वतोऽर्थमुपार्जयेत् ॥
सर्वाण्यपि च वित्तानि यतस्ततोऽपि राजनि ।
नृपस्य यदि जातानि दैवदृष्ट्याणि कोशवत् ।
आदाय रक्ष चैतानि ततस्तत्र च तत्र क्षिपेत् ॥
वित्तं वार्द्धुषिकाणान्तु कदर्यस्यापि यद्भवेत् ।
पाषण्डगणिकावित्तं हरन्नातो न किल्बिषी ॥
देवब्राह्मणपाषण्डगणका गणिकादय ।
वणिग्वार्धुषिकाः सर्वे स्वस्थे राजनि सुस्थिताः ॥
सप्तांशिन्नाह्मगोमायान यस्य दृष्टयकिल्बिषी ।
गृह्णीयात् सर्वतो राजा करान् य. पीडयेत् प्रजा. ॥
सोऽयं स कर्तुं फलकं मासं भुङ्क्ते चिरन्तराम् ।
सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा ॥
विजिगीषुनृपो नान्यै. कदाचिदभिभूयते ।
तदैवं हृदि सन्ध्यायन् निरुद्यमो नृपो भवेत् ॥
दैवपुरुषसंयोगे सर्वाः सिध्यन्ति सिद्धय ॥
नैकेन चक्रेण रथ. प्रयाति नचैकपक्षोऽङ्ग! वयाति पक्षी ।
एवं हि दैवेन च केवलेन पुंसोऽर्थसिद्धिर्न नरकारतो वा ।।
केचिद्धि दैवस्य तु केवलस्य प्राधान्यमिच्छन्ति विधिप्रवीणाम्।
पुंस्कारयुक्तस्य नरस्य केचिदप्यल दृष्टा पुरुषार्थसिद्धि ।
अत्युद्यमी क्रियतएवच य श्रमी च
शौर्यान्वितश्च गुणवांश्च सुधीश्च विद्वान् ।
प्राप्नोति नैव विधिना स पराङ्मुखेन
स्वीयोदरस्य परिपूरणमन्नमात्रम् ॥

धुम्नाणि हर्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य ।
उर्वीपतित्वञ्च नृपादरता च सर्वं हि मर्त्त्यः समुपैति दैवात् ॥
केषां हि पुंसां महतो हि दैवात् स्थानस्थितानामपि चार्थसिद्धिः ।
एषां प्रभुत्वं बहुजीविताश्च एको हि दैवो वितनोत्यतोऽत्र ॥
पुंस्त्रीप्रयोगादथ शुक्रयोगात् तयोर्हि मध्ये विदधाति गर्भम् ।
स्त्रीणां तु तत् विप्र । न चापि पुंसां भवाणि चैषां मनुजेश्वरत्वम्
कासां तु गर्भस्य न सम्भवोऽस्ति कासां तु शुक्रं ननु वीर्यहीनम् ।
धत्ते गर्भोऽपि जहाति गर्भं काचिच्च गर्भं न बिभर्ति दैवात् ॥
धाता विधाता निजकर्मयोगाद् विधेश्च कीट त्वनुभावभाव्यम् ।
दैवादृषीणां नच दैत्यकानां स एव कर्त्ता तु मनूद्भवानाम् ॥
दैवान्मघोनापि सहस्रमक्ष्णां देवाधिपायो क्षयरोगता च ।
दैवात्पयोधौ लवणोदकत्वं दैवाद्धरेश्चित्रतरा च दृष्टिः ॥
यद्यप्यमुष्य न परोऽस्ति दैवात् कुर्यात्तथापीह नरो हकारम् ।
उद्दीपयेत्कर्मकरो हकारादुद्दीपितं श्रीरिव वै तनोति ।
दैवेन केचिच्च हठेन केचित् केचिन्न हकारेण नरस्य चार्थाः ।
सिध्यन्ति यत्नेन विधीयमाना सेषा प्रधाना नरकारमाहुः ॥
स्वामिप्रधानं त्वथ दुर्गकोशान् दण्डं च मित्राणि च नीतियुक्ता ।
अङ्गानि राज्यस्य वदन्ति सप्त सप्ताङ्गयुक्तो नृपतिर्धराभुक् ॥
दुष्टेष्वसद्वृत्तनयेषु दण्डं राज्ञा विधेयं निपुणार्थसिद्धै ।
दण्डश्च मत्वाऽर्जितवित्तसत्त्वात् हीनार्थं पुत्रार्थं दमन्ति हीनम् ।
अन्यायतो ये जनान् जनेश्वराः संपीड्य वित्तानि नयन्ति लोभात् ।
तत्क्रोधवह्निपरिदग्धकाया क्षीणायुषस्ते तु भवन्ति भूपाः ।
दण्डो महान्मध्यकमन्यथास्तु मानन्तु तस्य त्वसरेणुकादि ॥
साशीति साहस्रपणान्महान् स्यादर्धादिके चैव तदर्धको वा ।

सर्वार्थपादैस्तु हरेच्च दण्डं पात्यो नृपैर्गोति वदन्ति सद्यः ॥
पाण्यादिशाच्छेदनमारणञ्च निर्वासनं राष्ट्रतश्च सद्य ।
ज्ञात्वापराधमनुजस्य यत्तु देशञ्च कालञ्च वयोवपुश्च ॥
दण्ड्येषु दण्डं विदधाति भूभृत्साम्यं स बध्नाति पुरन्दरस्य।
यः शास्त्रदृष्टेन यदा नरेश्वरो दण्डं विदध्याद्विधिवत्क्रमाच्च ॥
स चैवकीर्तीर्वितनोति गुर्वीरायुश्च दीर्घं दिवि देवभोगान् ।
यस्त्वक्रमागानि कुलानि राजा श्रेणिश्च जातीश्चरतांश्च लोकान्
आनीय मार्गे विदधाति धर्मे नागेशगीर्वाणगणै प्रशस्यम् ।
अन्यच वह्निर्जलविन्तशायशीताशुरूपाणि स बिभ्रतीह ॥
सर्वे च भूपस्त्विह रूपकञ्च तत्तथ्यमानं शृणुत द्विजेन्द्राः ।
यदा विजिगीषुर्धृतशस्त्रपाणि स्त्वयं समालम्ब्य स विद्दसैन्य ॥
सर्वान् सपत्नांश्च स हन्तुकामस्तदासहर्ष्यञ्च इवावभाति ।
आकारयात्कारयतोऽपि एष प्रजा हतेय स सहस्रकीर्ति ॥
यदा तदैनं नृपतीति विप्रास्तनूनपात्त प्रवदन्ति भूपम् ॥
धर्मासनस्थश्रुतिशास्त्रदृष्टाः शुभाशुभाचारविचारतस्मात् ॥
धर्म्येषु दानं लघुकृत्सु दण्डं यदावनीशः सच धर्मराजः ।
धनप्रदानेन करोति हृष्टा भूभृत्तदासान्द्रयिणेशवच्चान् ॥
समस्तशीतांशुगुणप्रयोक्ता यदायदामेव शुभाय शास्येत् ।
प्रसन्नमूर्तिर्गतमत्सरः सन् तदोच्यते सोम इव क्षितीश. ॥
आज्ञा श्रयाज्ञा परमं हि तेजो येषा न मन्ये त समस्तवश्यः ।
ब्रूयाच्च कुर्याच्च यदेवं भूभृत्कार्यन्तदेवं भुवि सर्वलोके ॥
दुर्धर्षतीव्राशुसमानदीप्तो ब्रूयान्मनुष्यः यदय नृपस्य ।
यदास्य तेजोऽप्ययमन्यमान्यः सद्य स पञ्चत्व मुपैति मायात् ॥

योऽश्नाय सर्वं विदधाति पश्येत्
शृणोति जानाति चकास्ति शास्ति।
कस्यापि चाज्ञा न विशति राज्ञः
समस्तदेवाग्रमयोऽपि यस्मात्॥
य, स्वधर्मे स्थितो राजा प्रजा धर्मेण पालयन्।
सर्वकामसमृद्धात्मा विष्णुलोकं सवाप्नुयात्॥
इति श्रीरत्नाकरीये राजधर्मः सम्पूर्णः।

---

अथ विप्रो वनं गच्छेद्विना वा सह भार्यया।
जितेन्द्रियो वसन्नेव नित्यश्चौताग्निकर्मकृत्॥
वन्यैर्मुन्यन्नैर्मेध्यैः श्यामनीवारकङ्गुभिः।
कन्दमूलफलैः शाकैः स्नेहैश्च फलसम्भवैः।
सायं प्रातश्च जुहुयात् त्रिकालं स्नानमाचरेत्॥
चर्मचीरवासा वै श्मश्रुलोमजटाधरः।
पितृंश्च तर्पयेन्नित्यं देवांश्चाप्यर्चयेत्।
अर्चयेदतिथीन् नित्यं भृत्यांश्चापि प्रपोषयेत्॥
न किञ्चित् प्रतिगृह्णीयात् स्वाध्यायेनैत्यमाचरेत्।
सर्वसत्त्वहितोपेतो दान्तश्चाध्यात्मचिन्तकः॥
सन्यस्तश्चात्मको नित्यं दानशील सदा द्विज।
किञ्चिद्दद्यात् समाश्याथ स वृत्त्या वर्तयेत्सदा॥
एकादशा तु कुर्वीत मासेकश्चार्थसंश्रयम्।
षाण्मासिकश्चाब्दिकञ्च यद्यार्थं च वने वसेत।
त्यक्त्वा तदाश्विने मासि अन्यं स्थानं समाचरेत॥
यथातद्भिनिष्टोर्व तु समिधाग्नौ च पालयेत्।

कृच्छ्रचान्द्रपराकाद्यैः पञ्चमासोपवासकैः ॥
त्रिरात्रैर्येकरात्रैश्च आश्रमस्थः क्षपेद्वपुः ।
तिष्ठन्नार्वतिकस्तत्र स्वपेदर्धंस्तथा निशि ॥
अतन्द्रितो भवेन्नित्यं वासरं प्रपदैर्नयेत् ।
योगाभ्यासरतो नित्यं स्थानासनविहारवान् ॥
वसन्तग्रीष्मवर्षासु जलान्याकाशमाश्रयेत् ॥
दन्तोलूखलिको वापि कालपक्वभुगेव च ।
स्यादश्मकुट्टकोविप्र फलस्नेहैश्च कर्मकृत् ॥
शत्रौ मित्रे समः स्याच्च तथैव सुखदुःखयोः ।
समदृष्टिश्च सर्वेषु न विशेद्वनगह्वरम् ॥
म्लेच्छव्याप्तानि सर्वाणि वनानि हि कलौ युगे ।
न भूय शासितारस्तु ग्रामोपान्ते वसेदतः ॥
ग्रामाद्वा नगराद्दूरे ह्यास्थारण्यवनानि च ।
नित्यं परक्षितान्येव सर्वेषां फलदानि हि ॥
भूपतेः प्रथमं तत्स्यात् क्षात्रं वसेद्द्विजाग्रतः ।
यागं वाऽरण्यवासं वा कुर्यान्नु तदनुज्ञया ॥
सुत्रामानलवायूनां यमस्येन्द्रविवस्वताम् ।
यदा विक्षेपयोर्ब्रह्मा मात्राभ्यो निर्ममौ नृपम ॥
पारत्रिकं तु यत्किञ्चित् यत्किञ्चिदैहिकं तथा ।
नृपाज्ञया द्विजातीनां तत्सर्वं सिद्ध्यति ध्रुवम् ॥
नृपतेः प्रथमं न स्यात् स वै द्विज । मखादिकम् ।
रक्षार्थं कथयित्वा तु यथाकार्यं समापयेत् ॥
धेनुपूर्वं वशिष्ठस्य ह्यासीद् दुर्वाससोऽपि च ।
वनवासाश्रमस्थस्य ह्यग्निकार्याय ताश्रयेत् ।

पलस्नेहाय दानस्य कालवैगुण्यतोद्विजः ॥
तथा गोदुग्धसर्पिष्य सम्निकार्यं समापयेत्।
सर्वकालेषु सर्वेषु तथा चैवाश्रमेषु च ॥
गोदुग्धादि पवित्रं स्यात् सर्वकार्येषु सत्तमाः !॥
सर्वकार्येषु सर्वेषु भिक्षां कुर्याद्दिनाश्रमी।
तथा सर्वे प्रकुर्वन्ति पितृदेवार्चनादिकम् ॥
अष्टौ भुञ्जीत वा ग्रासान् ग्रामादाहृत्य यत्नवान्।
आत्मनः संचयं गच्छेदनिशां प्रागुदीचिकाम् ॥

विप्रोविधाय वनवासविशेषधर्मान्
सर्वानिमानुक्तविधिक्रमेण।
समुद्य पापानि वपुर्विशोध्य
ब्रह्माधिगच्छेत् परमं द्विजेन्द्रः ॥

आश्रमत्रयधर्मात्प्राक् चरित्वा ते द्विजातयः।
द्वयोर्वा ततः पश्चाच्चतुर्थाश्रममाचरेत् ॥
द्विजाग्रजो यदा पश्येद्वलिं पलितं मात्मनः।
उपरति तथाचार्या क्षीणकामः स वै द्विजः ॥
समीक्ष्य पुत्रपौत्रं वा दृष्ट्वा वा दुहितुः सुतम्।
अधीत्य विधिवद्वेदान् कृत्वा यागविधानताम् ॥
निश्चयं मनसा कृत्वा चतुर्थाश्रममावसेत्।
अ.आपन्न विधायेष्टिं वनाद्वासमनोऽपिवा ॥
समस्तदक्षिणायुक्तां सर्ववेदान्तयाज्ञवान्।
अग्निनात्मनि चारोप्य दण्डान्विधिवदाचरेत् ॥
किञ्चिद्वेदं समास्थाय तद्धर्मेण च वर्त्तयेत्।
वाङ्मनःकायदण्डाश्च तथा सत्त्वादयो गुणाः ॥

सुमुख्यो नियतो यस्य स त्रिदण्डीति कथ्यते ।
कमण्डलुजपमालाञ्च भिक्षापात्रमथापरम् ॥
काषायवासःकौपीनकार्याथे वस्त्रमेव च ।
शिखायज्ञोपवीतञ्च दण्डानां त्रितयं तथा ॥
त्रिकालविधिवत् स्नानं भिक्षया चापि भोजनम् ।
शुष्केऽकष्टन्तिर्विप्रेषु सत्कर्म निरतेषु च ॥
भिक्षार्थं यो यतिः मोक्षो ह्युत्तवर्णैस्तथैव च ।
असंभाष्यं स्मृतिश्चैव तथाच शिल्पकारुभिः ॥
अवशत्यं तथा स्त्रीभिरेतत्कृत्यं यतेः स्मृतम् ।
सर्वदा दम्भसंरोधो नित्यमेकान्त[illegible]तः ॥
सदैव प्राणसंरोधः सदैवाध्यात्मचिन्तनम् ।
सदैव शुद्धावलम्बनमथ पात्रं यतेः स्मृतम् ॥
शुचिरम्भक्लमीषाञ्च गोवालयावमर्पणम् ।
न दण्डेनैव,दण्डेन विना वातेन वा तथा ॥
मोक्षावाप्ति भवेत्तु सा किन्तु साध्यात्मचिन्तनम् ।
समत्वं सुखदुःखेषु तथा वै द्वेषरागयोः ॥
आत्म समानधर्मत्व मजस्त्र चात्मचिन्तनम् ।
यतिभिस्त्रिभिरेकत्र द्वाभ्यां पञ्चभिरेव च ॥
न स्थातव्यं कदाचित्स्यान्शिस्यन्तो नाश्रमामुयुः ।
यच्चत्र यत्र भिक्षाणां वार्ताश्च विचित्रकाः ॥
स्नेहपैशुन्य मात्सर्यभिक्षाणां नृपतेरपि ।
तस्मादेकान्तशीलेन भवितव्यं सदा द्विज ! ॥
चात्माभ्यासरतो नित्यं ब्रह्मावाप्ति समीप्सताम् ।
त्रिदण्डग्रहणादेव प्रेत्य नैव जायते ॥

अध्यात्मयोगयुक्तस्य ब्रह्मावाप्तिर्भवेद्यतः ।
यतेन्द्रियोऽपि दण्डार्हो युवा तस्य तथा निरुक् ॥
युवा निवृत्तयाभिक्षुरामेऽद्भमदर्पक ।
भिक्षुर्गृहे वसेन्नैव कामार्थान्वीऽभिगच्छति ॥
तत्स्थानेन तथा चैव सह तेनैव तापयेत् ।
निवसेदेकरात्रञ्च बहिर्ग्रामे तु वेश्मनि ॥
स तारयति हृद्यानां विंशतिं पितृमातृतः ।
भिक्षुर्यस्यान्नतु ब्रह्म योगाभ्यासरतो भवेत् ॥
परिणामय योगेन चतुष्कल्पो व्रती स तु ।
निर्ममो निरहङ्कारः सर्वं सह प्रयच्छति ।
ब्रह्मण्यात्मनि गोमायो मृतो दुःखात् दाम्भिकः ।
चिह्नानि धात्रा कथितानि यस्यवक्त्रे समस्ताभिर्हितेव भिक्षा ॥
योध्यानवान् वा सततं जिताक्ष स ब्रह्मकाव्ययोगमन करोति ॥
वनस्य भिक्षुधर्मान् वै यानब्रवीत्पराशर ।
तथावदभिधायेतान वक्ष्याम्याश्रमभेदकान् ॥
इति श्रीबृहत्पाराशरीये धर्मशास्त्रे वानप्रस्थयति-
धर्मोनाम दशमोऽध्यायः ।

---

## एकादशोऽध्यायः ।

अथातः सम्प्रवक्ष्यामि भेदमाश्रमसम्भवम् ।
ब्रह्मचर्यादिकानान्तु तथा तथ्यं निबोधत ॥
चतुर्णामाश्रमाणां तु भेदो दृष्टो मनीषिभिः ।
प्रत्येकशो वदाम्येतत् शृणुध्वं द्विजसत्तमाः ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथा यती।
एतद्भेदं प्रवक्ष्यामि शृणुध्वं पापनाशनम्॥
चतुर्धा ब्रह्मचारी च स्नातो यत्र यतस्तथा।
ब्रह्मायत्याप्येतेति लक्षणानि पृथक् पृथक्॥
उपचारलवणाशित्या गृहेयत्याच स प्रत्यहम्।
वर्तते त्रपया नित्य गायत्र्यं तत्प्रकीर्तितम्॥
चतुर्थं द्वादशाब्दानि योऽधीयानश्चतुः श्रुती।
भिक्षया ब्रह्मचर्येण तेष्वध्यात्म तदुच्यते॥
ऋतुकालाभिगामी सन् परस्त्रीपर्ववर्जक।
वेदानध्येति भिक्षाभुक् प्राजापत्योऽयमुच्यते॥
गुरोर्वा गुरुपुत्रस्य तत्पत्न्या वापि सन्निधौ।
यो वसेदात्मसंत्राण ब्रह्मचारी स नैष्ठिकः॥
गृहस्थस्य चतुर्भेदो मतः शालीनतीव्रकौ।
यायावरास्तथा चान्ये घोरसन्यासिकास्तथा॥
कृषिगोरक्षवाणिज्यैः सर्वान् कुर्वन् क्रियां द्विजः।
विहितोक्षाम्विद्याय वार्तावृत्तिः स उच्यते॥
ददात्यध्येति यजते याजयेत् चैव पाठयेत्।
कुर्यात्कर्म प्रतिग्राही शालीनोऽध्यानकद्विजः॥
चक्रः सन् कारयेदन्या क्रिया कुर्यात्प्रतिग्रहे।
पाठको नियतात्मा च यायावरः स उच्यते॥
तिष्ठेद् यश्च शीलोञ्छाभ्या सुद्धृताद्भिश्च वर्तते।
आत्मविन्न क्रिया कुर्यात् घोरसन्यासिक स तु॥
वानप्रस्थचतुर्भेदो वैखानस उदुम्बर।
वालखिल्यो वनेवासी तन्नचरणमथोच्यते॥

फलैर्मूलैरकृष्णाद्यैरग्निकल्पेन वै वसन् ।
कुर्यात्पञ्च महायज्ञानात्मविद्वेदपारगः स तु ॥
इमानि तृणफलः कृष्णाभक्ते मनुः उदर्ध्वरे ।
योवा वसेद्‌वतो योनी पञ्चयज्ञाग्निकर्मकृत्॥
वनस्थो वालखिल्यो यो वसेत् वल्कलचीवरम् ।
अग्निकार्यकदाचश्च दुजीतसेवितं त्यजेत् ॥
चतुरोऽन्यानमूनग्निकार्यं कुर्वन्वने वसेत्।
फलस्नेहैः फलैर्वन्यैर्वैङ्कभिः श्रुतिचोदितम् ॥
उद्धृत्य परिभूताद्भि तथा वै वित्तहृत्तिक. ।
फलैर्वन्यैर्वैनाग्नैश्च फेनप पञ्चयज्ञकृत् ॥
पुत्रस्य भ्रातृपुत्रस्य भ्रातृदौहित्रयोरपि ।
न कुर्यात. कुटीस्थोवा यदृभैक्ष्य हविर्भुक् द्विज. ॥
ज्ञेयो यङ्कदयो नाम यश्च पवित्रपादुकः ।
शिखासनोपवीतानि धातुकाषायवासकृत् ॥
चतुर्भेदपरिव्राट् स्यात् कुटीचरबहूदकौ ।
हंसा. परमहंसाश्च यच्चान्ते तु पृथक् पृथक् ॥
साधुवृत्ति द्विजो यस्तु भिक्षाभुगात्मचिन्तकः ।
बहूदक. स च ज्ञेयः परिव्राट् स त्रिदण्डधृक् ॥
एके दण्डधरा हंसा शिखोपवीतधारिणः।
वार्याचारकराः शान्ता भूतानामभयप्रदाः ॥
वसेदेकत्त्रपा ग्रामे नगरे पञ्च सर्वशः ।
मर्षयन्तो व्रतैर्देहमात्मध्याने सदा रताः ॥
एकदण्डधरा मुण्डा कन्थाकौपिनवाससः ।
अत्यन्तजिह्मिनोऽव्यग्राः सर्वदैव च मौनिनः॥

शिखादिरहिता शान्ताः उन्मत्तरवधारिणः ।
नग्नः शूरामरैः केषु वासिनो ब्रह्मचिन्तकः ॥
ये ते परमहंसा वै नैष्ठिका ब्रह्मभिर्त्तवे ।
उक्ता सद्भूतभेदज्ञैरात्मन प्रार्थनापरा. ॥
यो ब्रह्मचर्यव्रतचारिभेदी
भेदो गृहस्थस्य तथैव यत्नत. ।
हिरण्यवासी द्विजकर्मभेदी
ह्युक्तो मयीसौहृद्द्विजभिक्षुभेद ॥

इति बृहत्पाराशरीये वानप्रस्थरत्याश्रमभेदो नाम एकादशोऽध्याय. ॥

---

## द्वादशोऽध्यायः ।

मुमुक्षवो विरज्यन्तो देहाद्देहादितो यथा ।
शरीरत्रासया प्राज्ञ. परब्रह्मनय गता ॥
स्वेदाद्यन्यन्मुधाकीभि शारव्यामाशुनामि तत् ।
तन्मुख्ये गुणसंयुक्ते सत्पथचालनं व्रजेत् ॥
शुक्लशोणितसंयोगात् स्त्रीकोष्ठपाकसम्भवम् ।
दु खेन दशभिर्मासैर्व्यापितम्भूरि दोहदै. ॥
जनन्यादौ स्तन्याभावे गर्भस्थस्यापि दु.खित ।
पतत जायमानस्य योनियन्त्रनिपीडनात् ।
जातस्य बालरोगाद्यै. योगिनीग्रहदोषत. ।
देहिनः सर्वदा दु खं पूजाजन्मादिकैर्ग्रहै ॥
एवं बाल्ये महद्दु खं कामाद्यं यौवनेऽपि च ।

एकद्दक् दृष्टरूपस्य पुनरन्येन पश्यतः ।
यद्राचं यद्दहौं वस्तु तद्वैतत्पृशाम्यथ ॥
यच्चास्पृश्य च पश्यामि प्रतीतिर्यस्य जायते ।
दर्शनाभ्यां तु संनत यच्छेयादेकवमन. ॥
अस्ति ह्यात्मा परो देहात् यो देहीति च कथ्यते ।
गृहीच गृहमध्यस्थो सन्नादिच समाचरेत् ॥
देहे चतादिसरोहान् तयो देहास्ति कश्चन ।
स एव पूज्यते कुर्वन् उद्देयो तस्य तावति ।
वार्यते कर्मणा चाचिं बाध्यते कर्मणापि च ॥
उभयस्यापि चैवात्र प्रत्यक्षं दृश्यते हिजा. ।।
मायाविसद्धं मूकत्वमतिक्रान्तागताश्रुमान् ॥
अत्र बाधान्यहर्तृ या पिशुने पूतिनासिना ।
भरतो वर्णकैयिलैर्देहस्य वर्णयेत्तथा ॥
कुर्वन्नानाविध कर्म तथात्मा कर्मजस्तनुः ।
जरायुजाण्डजादीनि वपूंषि यो यच्छेश्रिते. ॥
कर्मभिर्यभेदैश्च विवदैर्गत्यरुप्यत. ।
बधिरान्धकिनः क्लीवा जायन्ते पुरुषाधमाः ॥
निरत. स पुनर्भूत्वा विद्वद्विप्रकुलेषु च ।
महाकुलीनाच जायन्ते लक्षणान्वितयान्वित. ॥
धनवन्तः प्रजायन्ते वेदवन्तो यशस्विन. ।
रूपसम्पाग्यसम्पृक्ताः सर्वेषां नयनप्रियाः ॥
ब्रह्माद्याश्चरता शान्ता. षट्कर्मनिरतास्तथा ।
पशुयज्ञरतो नित्य अग्निष्टोमादिषु स्थिता. ॥
द्विजोपाराकरा नित्यहर्योचार्यादि पूजकाः ।

चतुराश्रमधर्माणां कथिताः समदर्शिन ॥
गुणैः सर्वैः समायुक्तास्तेऽलक्षिनो द्विजप्रिया ।
एवम्भूतास्तु ये विप्रास्तेषां विष्णुः सदान्तिके ॥
विष्णुश्च सर्वदेवत्वं तस्माद्विष्णुमयो भवेत् ।
देवत्वार्थी ह्यता नित्यं गुरूपासिरतस्तया ॥
ब्रह्मैवाचारता सम्यक् ब्रह्मसान्निध्यमृच्छति ।
तदुपास्य सदा ब्रह्म यावत्साधनकाम यत् ॥
बहुपापान्विदित्वा च, ससरेत्रेव मानवे ।
*वदन्ति ब्रह्मदेवेषे ब्रह्माभ्यासमनैकशः ॥*
ब्रह्मापि द्विविधं धाम न.पर परमेव च ।
समात्र मपरं ब्रह्म शब्दब्रह्मेति कीर्तितम् ॥
प्रणवाख्यन्त्रिरूपन्तत् मात्रेव हि विशेषतः ।
प्राणायामे तदभ्यस्य पूरकाद्यैश्च वायुभि ॥
पूरको कुम्भको वायू रेचकश्च तृतीयक. ।
येन व्यावर्तते वायुर्नासाग्राभि:सदम्बहि" ॥
श्वासयोगेन तं प्राज्ञः पूरक तद्विदोऽनिलम् ।
श्वासयोगं ददन्त्येन कावय स्तम्भ पावनम् ॥
विदुस्त रेचक तज्ज्ञाः रेच्यश्च शनकै. शनैः ॥
न वेगाद्रेचयेद्वायुः सर्वथा विघ्नभाक् भवेत् ।
मोचयेन्मन्दमन्दन्तु वह्निः स्यात् कुम्भितो यथा ॥
नासाग्रस्थितपार्णाणु संयिवश्चालनं चमम् ।
धनिल रेचयेद्योगी न मन्द वाति वेगवान् ॥
न प्रायतेऽनिलो यस्य नि.सरत्रासिकायतः ॥
यस्यास्ते कुक्षितो जन्म प्राणयोगी स उच्यते ।

दीर्घांशुकं परं स्थानं समस्ता योगरूढय ॥
देहे तस्मावतिष्ठन्ति प्राणायामवशीकृता ।
यत्र तिष्ठति जीवस्य निष्क्रोऽस्य उच्यते ।
स किन्न धार्य्यते प्राणो ब्रह्मा तिष्ठति यत्र तु ॥
प्राण एव हिंसात्मा च प्राणो देहस्य वाहक ।
शरीरान्नि स्त्री प्राणे नाम्ना विषयवाहक ॥
देहं त्यक्त्वा यदा जीवो बहिराकाशमास्थित: ।
तदा निर्विषयो वायु र्भवेदत्र न संशय ॥
तदा ससर्ज देहेषु नासाग्रमास्थित शिव ।
प्रत्यक्ष सर्वभूताना तिष्ठते नच लक्ष्यते ॥
तदा न श्वसते वायु स्तदा निष्कल मुच्यते ।
नाभिस्थस्तु विज्ञाय जन्मवाधाद्विमुच्यते ॥
देहस्य. सर्वसत्वाना स जीवति शृणोति च ।
धर्माधर्मौ समष्टभ्यौ देहे देहे व्यवस्थितौ ॥
सुहृत्कर्मसस्थस्तु अथ ऊर्द्ध प्रधावति ।
धर्माधर्मैर्महापाशै र्गृहीत स प्रवर्त्तते ॥
अर्द्ध मुच्छ्वसते यावत् प्राणो द्रव्यसमीरणात् ।
तावत्प्राणस्तु विज्ञेयो यावन्नासाग्रमास्थित ॥
अतस्थं निष्कलं ब्रह्म यावन्न श्वसते द्विज ।
श्वसनेन समायोगादाकाशात्पुनरागत ॥
नासारन्ध्रसमालीन स्तदा निष्कल उच्यते ।
स जीव इति विख्यात स विष्णु स महेश्वर: ॥
ध्यातव्या देवतास्तत्र क्रमेण पूरकादिषु ।
विष्णुब्रह्मेश्वरास्तेषु स्थानेषु स्थापरा द्विजै. ।

नीलपङ्कजविख्यात आनीय नाभिमध्यतः ॥
महात्मानं चतुर्बाहुकेयूरन्त हरिं स्मरेत् ।
हृत्पद्मे कुम्भके ध्यायेद्-ब्रह्माणं पङ्कजासनम् ॥
रक्तेन्दीवरवर्णाभं चतुर्वक्त्रं पितामहम् ।
रेचके शङ्करं ध्यायेत् ललाटस्थं त्रिशूलिनम् ॥
शुद्धस्फटिकसङ्काशं संसारार्णवतारकम् ।
एष श्रमनसरोधो देवतात्रयचिन्तनात् ।
अग्निसोम्यसंयोगादन्तरं शुध्यते त्रिभिः ॥
निरोधाद्भवद्वायुस्तस्मादग्निस्ततो जलम् ।
इति त्रिदेवतायोगात् शुद्धन्येन पुनर्हिता ॥
भवन्ति प्रणवोपेताः प्राणायामस्तु पञ्चग ।
अपि भ्रूणहनं मासात् पुनात्यहरहः कृतः ॥
प्रातरुच्चसायस्व पूरकं ब्रह्मणोऽन्तिकम् ।
रेचकेन तृतीयेन प्राप्नुयात् परमं पदम् ।
न प्राणेनाप्यपानेन वायुवेगेन रेचयेत् ॥
प्रागुक्तेन प्रयोगेण शोषयेत्प्राणसंयमी ।
शरीरस्थ शिरोग्रीवं वक्षस्थाणि च पादयम् ॥
सर्वाङ्गं निश्चलं धार्य्यमापूर्य्य सर्वनाडिकाः ।
सम्यस्याङ्गानि सर्वाणि कर्मविज्ञानतद्द्विजः ॥
बद्धासनो चलाङ्गस्तु कुर्यादसुनिरोधनम् ।
कृत्वासुसञ्चय विद्वान् विधिवत्संसुपस्पृशेत् ॥
अन्तरे शुध्यते यस्मात् कुर्यादाचमनं स्मृतम् ।
इत्युक्तः प्राणसंरोधो देवतात्रयसङ्कुत ॥
त्रिमात्रप्रणवस्तत्र ध्यातव्य सर्वयोगिभि ।

सूर्यमाणस्य वातस्य विश्रान्तिः स्वादमात्रकै ॥
तत्परं निष्कलं ज्ञानं तद्विदु ब्रह्मचिन्तकाः।
मृदुमध्योत्तमत्वाच्च स्थूलसूक्ष्मानुभावतः ॥
त्रिविध प्राणसंरोधं विदुस्तत्त्ववेदिनः ।
क्रियमाणो विशेषेण प्रत्याहारोऽय मुच्यते ॥
सर्वं प्रागुक्तमेव स्याद्विशेषं तु निबोधत ।
बाह्य वायु यथोत्थाप्य धारणा यच्छनैः शनैः ॥
निरुध्य विधिवद्योगी प्रत्याहारः स उच्यते ।
व्याहृत्यातिसुखी यत्र स्थानि यत्र निरुध्य च ॥
चिन्तयेन्निश्चलीकृत्य प्रत्याहार स उच्यते ।
प्राणायामयवस्तूना सकलाद्यास्तुवायवः ॥
निरोद्धव्या इतोऽप्येते प्राणसंयमकारिभिः ।
वायुरेकोऽपि देहस्थः क्रियाभेदेन भिद्यते ॥
प्रकर्षेण समन्ताच्च न यानादिक्रिया स्मृता ।
भविष्यातीतकालेभ्यः कर्मभ्यश्चाम् संयमो ॥
सर्वानिलास्तथा स्थानि निरुध्यैकत्र धारयेत् ।
स धीमान्वेदविद्विद्वान् स योगी ब्रह्मवित्तम ॥
स्थान द्विजोत्तमा विधिवत् प्रोक्त सांगस्य यदुयातिविधि, परस्य
पाराशरोक्तैर्बहुभि प्रकारै रुक्तोविधि प्राणनिरोधनस्य ॥
प्रत्याहारो विशेषस्तु प्रोक्तमस्यैव वित्तमा ।।
यदभ्यासाद्भुयाद्ब्रह्म सर्वदा नैदमव्ययम् ॥
इति श्रीबृहत्पाराशरे प्राणायामप्रत्याहारविधि ।

यातैर्न पुनरावृत्तिः कदाचिदिह दृश्यते ।
सस्मृति नाप्नुयाद्येन शक्रस्तु तदब्रवीत् ॥
उक्तोऽसि संयम पूर्वं विधिहीनोऽपि नाशनः ।
निबोधस्व चतुर्थन्तु ध्यानं प्रणववैधसः ॥
विधिवत्प्रणवध्यानं सैकचित्तस्तु योऽभ्यसेत् ।
ब्रह्माभ्येति स मुक्तात्मा स योगी योगिनां वरः ॥
तद्ध्यानमसुसंरोधं तुर्यमस्य गिरोच्यते ।
तदभ्यासविधानन्तु चिन्तादिविवर्जितम् ॥
तच्छान्तं निर्मलं शुद्धं ध्यातव्यं हृत्सरोरुहे ।
तद्वै यत्तद्वरेण्यन्तु मुक्तिबीजं तदुच्यते ॥
सञ्चिन्त्य व्याहृतीः सप्त प्रणवाद्याः सदन्तकाः ।
सम्यग्युक्तमिदं ध्यात्वा परब्रह्मणि योजयेत् ॥
हुतभुक् पवनो जीवस्त्रयोऽप्येते हृदि स्थिताः ।
ये तत्स्वर्यन्तु वैफल संसारे ध्यानकाङ्क्षिणः ॥
ॐकारावर्त्तनालेन उद्धृत्य परियोजयेत् ।
योजयेत्सर्वमेवैतत्स्वस्थयोगी स उच्यते ॥
शून्यभूतं तु यत्प्राणो ह्यासजीवितसंश्रितम् ।
यस्मादुत्पद्यते श्वासः पुनस्तत्र निवेशयेत् ॥
आद्यन्तप्रणवं विद्वान् घटाकाशवदुत्सृजेत् ।
स पश्यन् निर्मलं योगीपुरुषं सम शाश्वतम् ॥
अन्तर्वक्त्रः बहिः रुद्धकुण्डलीभूतसर्पवत् ।
ध्यातव्यः प्रणवस्तस्य मध्यमं धाम सञ्चरेत् ॥
स ध्यातात्मा स बिन्दुश्च तदेव परमं पदम् ।
तदभ्यस्य हि तज्ज्ञात्वा स तस्मिन्नेव लीयते ॥

प्रथमं प्रणवो वक्ता स्वक्षरः परमाक्षर ।
तज्जत्वमन्यदाप्नोति समाप्य परम पदम् ॥
पञ्चमं तु पंद विद्वन् । ह्रस्वार्धेन्यवतिष्ठते ।
नादविन्दु समाख्यातोद्विजेन्द्रा. । परमंपदम् ॥
यत्प्राप्य न निवर्त्तन्ते भ्रातृत्वस्याल्यमेव च ।
सर्वेभ्यो मातृकावर्णा पुनस्तत्र विशन्ति च ।
वर्णात्मास्तत्रवर्णास्तु समस्तं वर्णजीवनम् ॥
न दीर्घं न च ह्रस्वश्च न घोषं नाप्यघोषवत् ।
न विसर्गस्य वा विद्वान् नानुस्वारविपर्यय ॥
ह्रस्वाकाशनिविष्ट यदचलत्व प्रयाति चेत् ।
ज्ञानयोगे त्रिपद्दैवैं यो॰ विभर्त्यक्षराणि तु ॥
तत्पर योगिभिर्ध्येय व्योम यस्य तु मध्यमम् ।
व्योमान्तगं यत्तुध्येयमनन्ताकाशमव्ययम् ॥
चिन्तयामो वयं तत्त्वं धियो यो न प्रचोदयात् ।
ये तद्ब्रह्मत्रयीरूप मेतद्धर्म त्रयीमया ॥
येषा स परमा मुक्ति र्गत्वा या न निवर्त्तते ।
आदाय चांपं प्रणवं च बाणा सन्ध्याय चात्मानमवेध्यलक्ष्यम्॥
लक्ष्यं भिंधि त प्रविविश्य तस्मिन् प्राप्नोति योगी स तु मुक्तिधाम
षट्चक्रभक्तिं विधिनादि विद्वन् । ध्यानं विधेय ध्वनिपूर्वकश्च ॥
सर्वं विधानं विधिवच्च सम्यक् यत्न समर्थोविधिरेव चास्य ॥

इति श्रीबृहत्पाराशरीये योगाध्यायप्रपाठ
ध्यानविधि सम्पूर्णं ।

---

तिलान्नयोतिलान् दद्या त्तलान् मातर्भस्प्रशेत ।
तिलास्निग्ना इति ब्रूयात् महत्पापविमुक्तये ॥
तिलास्तु देवताकृपा नावमन्या द्विजा तभिः ।
भोजनाभ्यञ्जनाद्दानाद्यो न वत् कुरुते तिले ॥
कृमिभूत्वाश्वविष्ठाया पितृभि सह मज्जति ।
तिलान यो पीडयेद्विप्रो स्वहस्तेन स्वय नृप ॥
पीडयेद्यदि तान् मोहान्नरकं याति रौरवम् ।
इतिवशोद्भवे सोम, सोमवंशोद्भवे द्विज ॥
इक्षून् य पीडयेत्तस्माद्विधुपात्वात्मघातकः ।
इक्षुदण्डसहस्रेण एकैकेन द्विजोत्तमं ॥
ब्रह्महत्यामवाप्नोति ब्राह्मणो यत पीडक ।
तस्मान्न पीडयेदिक्षून् मन्त्रचक्रे द्विजोत्तम ॥

इति श्रीगौतमीये वैष्णवधर्मशास्त्रे तिलान्नदानादिप्रशंस नाम त्रयोदशोऽध्याय ।



## चतुर्दशोऽध्यायः ।

युधिष्ठिर । समुद्धय तु धर्माणां भोज्याभोज्यश्च केशव ।
श्रुतं मया त्वत्प्रसादादापद्धर्म ब्रवीहि मे ॥
भगवानुवाच । दुर्भिक्षे राष्ट्रस्यार्ते अशौचे सूतसूतके ।
कर्मकालेऽध्वनि तथा नियमस्थो न लुप्यते ॥
दूराध्वगमनात्खिन्नो द्विजालाभे तु शूद्रत ।
अकृतान्नश्च यत्किञ्चिद्गृह्णीयादात्मवृत्तये ॥
आतुरो दु खितो वापि भयार्तो वा बुभुक्षित. ।

भुञ्जन्विधि । विप्र प्रायश्चित्तीयते न च ॥
यत्किञ्चिदपि कुर्वाणो विद्वान् गुरुनियोगकः ।
तेषां वचनसामर्थ्यात्प्रायश्चित्तीयते न च ॥
अनृतावृतुकाले वा दिवा रात्रौ तथापि वा ।
प्रोषितस्तु स्त्रियं गच्छेत्तु प्रायश्चित्तीयते न च ॥
निमन्त्रितस्तु यो विप्रो विधिवद्धव्यकव्ययोः ।
मांसादीन्यपि भुञ्जानः प्रायश्चित्तीयते न च ॥
अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः ।
हविर्ब्राह्मणकाम्याया गुरोर्वचनमौषधम् ॥
अशक्तः विधिवत्कर्तुं प्रायश्चित्तानि यो नरः ।
विदुषां कथनेनापि दानेनापि विशुध्यति ॥
युधिष्ठिर । प्रशस्यः कीदृशो विप्रो निन्द्यश्चापि सुरेश्वर ! ।
षट्कर्मसक्तः कालज्ञो कथय माधव ! ॥
भगवानुवाच । सत्यं यदि द्विज दृष्ट्वा स्थानं प्रेपति भास्कर ।
एष मे मण्डलं भित्वा याति ब्रह्म सनातनम् ॥
कुलीनः कर्मकृद्वेदी तथैवाप्यनसूयकः ।
सदाऽऽदम्भः सत्यवादी पात्रं सर्वे इमे द्विजा ॥
ये ते चाग्नौ तते स्थानं भुञ्जाना प्रथमं द्विजाः ।
तस्याः पंक्त्यां तु ये चान्ये तत् पुनन्त्येव दर्शनात् ॥
मद्भक्ता ये द्विजश्रेष्ठा मद्गता मत्परायणाः ।
तान् पङ्क्तिपावनान् विद्धि पूज्यांश्चैव विशेषतः ॥
निन्द्यान् शृणु द्विजान् राजन् ! अविप्रा वेदपारगान् ।
प्राणागोप्यायमनाद्योऽप्य परन्तः पापकर्मणः ॥
अनग्निरनधीयानः प्रतिग्रहरुचिश्च यः ।

यत्र कुत्र च भुञ्जान स्तविद्यात्पङ्क्तिदूषकम् ॥
मृतसूतकपुष्टाङ्गो यस्तु शूद्रान्नभोजनः।
अहञ्चापि न जानामि गतिमस्य नराधिप ।॥
शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः।
जपतोजुह्वतो वापि गतिरूर्द्ध्वं न विद्यते ॥
आहिताग्निस्तु यो विप्रः शूद्रान्नेनापि वर्त्तते।
पञ्च तस्य प्रणश्यन्ति आत्म ब्रह्म-त्रयोऽग्नय. ॥
शूद्रप्रेषणकर्त्तुश्च ब्राह्मणस्य युधिष्ठिर ।।
भूम्यामन्नं प्रदातव्यं श्रृगालसमो हि स.॥
प्रेतीभूतञ्च यः शूद्रं ब्राह्मणोज्ञानदुर्बलः।
अनुगच्छेन्नीयमानं त्रिरात्र-मशुचिर्भवेत् ॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्।
प्राणायामशतं कृत्वाघृत प्राश्य विशुद्ध्यति ॥
अनाथब्राह्मणं प्रेतं ये वहन्ति द्विजोत्तमाः।
पदे पदेऽश्वमेधस्य फलं ते प्राप्नुवन्ति हि ॥
न तेषा मशुभं किञ्चित् पाप वा शुभकर्मणाम्।
जलावगाहनादेव सद्यः शौच विधीयते ॥
शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि।
इतन्नेन न भोक्तव्यं विद्धि शूद्रान्नमेव तत् ॥
विप्रार्था भोक्तुकामाना मत्यन्तस्यान्नकाङ्क्षया।
यो विघ्नं कुरुते मर्त्य स्ततोऽन्यो नास्ति पापकृत् ॥

सर्वे च वेदाः सहविभिसषड्भिः साङ्ख्यं पुराणञ्च कुलञ्च जन्मनोः
एतानि सर्वाणि गतानि भवन्ति शौचव्यपेतस्य न हि द्विजस्य
गृहोपरागे विषुवायनादि सुपुण्यतिथ्यादि सुते च जाते।

गोभिश्च पुरुषैस्तैस्तैर्यथा राजसूयादि यिष्यते ॥
मातृस्था इति यो ब्रूयाद्वीरघ्ने ब्राह्मणस्य च ।
तिर्यग्योनिशतं गत्वा चण्डालेषु प्रजायते ॥
ब्राह्मणस्य तु देवस्य दरिद्रस्य च यद्धनम् ।
गृहीतापि हत द्रव्यं स्वर्गस्थमपि पातयेत् ॥
धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः ।
द्वितीयन्तु स्मृतिशास्त्राणि तृतीयं लोकसंग्रहः ॥
आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ।
हिमवद्विन्ध्ययोर्मध्यमार्यावर्तं प्रचक्षते ।
सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ॥
तद्देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ।
तस्मिन्देशे सदाचारः पारम्पर्यक्रमागतः ॥
वर्णानां सान्तरालानां स सदाचार उच्यते ।
कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनिकाः ॥
एते ब्रह्मर्षिदेशास्तु ब्रह्मावर्तादनन्तरम् ।
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ॥
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि ॥
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ।
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ॥
स ज्ञेयो याज्ञियो देशो म्लेच्छदेशस्त्वतः परम् ।
एतान् विज्ञाय देशांस्तु संश्रयेरन् द्विजातयः ।
शूद्रस्तु यस्मिन् कस्मिन् वा निवसेद्वृत्तिकर्शितः ।
आचारप्रभवो धर्मो ह्यहिंसा सत्यमेव च ॥

दानश्चैव यथा शक्ति नियमानियमैः सह।
वैदिकैः कर्मभिः पुण्यैः निषेकादि द्विजात्मनाम् ॥
कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च।
गर्भै र्होमैर्जातकर्म नामचौडोपनायनैः ॥
स्वाध्यायैस्तर्पणैश्चैव विवाहस्नातकव्रतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते ततः ॥
धर्मार्थौ यस्य नस्याताम् शुश्रूषा नपि तद्विधः।
न तस्य विद्या वक्तव्या कदाचिदपि चोयरे ॥
लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च।
यतो ज्ञानागमं प्राप्य स पूर्वमभिवादयेत् ॥
सव्येन सव्यं स्प्रष्टव्यो दक्षिणेन तु दक्षिणम्।
न कुर्य्यादेकहस्तेन गुरोः पादाभिवन्दनम् ॥
निषेकादीनि कर्माणि यः करोति यथाविधि।
अध्यापयन्ति वेदांश्च स विप्रो गुरुरुच्यते ॥
दृष्टोपनयनं वेदान्योऽध्यापयति नित्यशः।
सुकल्पान् रतिशाखांश्च स उपाध्याय उच्यते।
साङ्गान् वेदांश्च योऽध्याप्य शिक्षयित्वा व्रतानि च ॥
विवृणोति च मन्त्रार्थान् आचार्य्यः सोऽभिधीयते।
उपाध्यायाद्दशाचार्य्य आचार्य्याणां शतं पिता ॥
पितुर्दशगुणं माता गौरवेणातिरिच्यते।
तथा शेषा यतो तिष्ठेत् तत्र शुश्रूषापरो भवेत् ॥
अवमानात् तेषां हि नरकान्याति सर्वशः।
धनज्ञानातिरिक्तान् विद्याहीनान् वयोऽधिकान् ॥
रूपहीनाश्च जातिहीनांश्च नाक्षिपेत्।

अपतो यत् कृत पुण्यं सेव्यमानन्तु गच्छति ॥
सेव्यमानस्य यत्पाप अपन्तं मनुगच्छति ।
नास्तिक्य लोकनिन्दाश्च देवतानाञ्च कुत्सनम् ।
द्वेष स्तम्भञ्च मोहञ्च क्रोधन्धैर्य्यञ्च विवर्जयेत् ॥
यस्य यस्य हि यो भाव स्तेन तेन हि तं रयम् ।
अनुप्रविश्य मेधावी स्विममात्मवशन्नयेत् ॥

इति गौतमीये श्रीवैष्णवधर्मशास्त्रे धर्मसारसमुच्चयोनाम चतुर्दशोऽध्याय. ।

---

## पञ्चदशोऽध्यायः।

युधिष्ठिरः। भगवस्तव भक्तस्य मम धर्मजनप्रिय ! ।
धम पुण्यतम देव ! पृच्छत, कथयस्व मे ॥
यदेकमग्निहोत्र वै सृष्ट वर्णत्रयस्य तु ।
मन्त्रस्य ब्रह्मा तं सम्यग्विधिना चाप्युपासितम् ॥
आहिताग्निस्त्रयस्पूर्व सपत्नीक सबान्धवम् ।
वध तद्ब्राह्मणैर्देव ! होतव्य चविधे कथम् ॥
वैश्वैर्वा देव ! देवेश ! कथ वा सुकृत भवेत् ।
यस्मिन् काले कथं कस्यपियोऽग्नि ,स्यात् सुरेश्वर! ॥
आहितस्य कथ वापि सम्यगाचरणं भवेत् ।
, कत्यग्नयः किमात्मानं स्थाने कि कस्य वा विभो! ॥
कतरस्मिन् वा स्थाने कि भवेदग्निहोत्रक ।
अग्निहोत्रनिमित्तञ्च किमुत्पन्न पुराऽनघ ! ॥

कथमेवाग्नयो हूयन्ते प्रीयन्ते च सुरैः कथम्।
विधिवन्मन्त्रवद्भक्त्या पूजिता स्त्वग्नयः कथम्॥
कां गतिं वदतां श्रेष्ठ! नयन्ति ह्यग्निहोत्रिणम्।
दुर्हुताश्चाग्निहुताश्चाप्यविज्ञातास्त्रयोऽग्नयः॥
किमाहिताग्नेः कुर्वन्ति चीर्णाश्चा अपि केशव!।
उत्सन्नाग्निस्तु पापात्मा कां योनिं देव! गच्छति॥
एतत्सर्वं हि देवेश। भक्त्या भूपगतस्य मे।
वक्तुमर्हसि धर्मज्ञ! सर्वावास! नमोऽस्तु ते॥
भगवानुवाच। शृणु राजन्! महत् पुण्यमिदं धर्मामृत परम्।
यत्र तारयते भक्तान् ब्राह्मणानग्निहोत्रिणः॥
ब्रह्मा त्वेतान् सृजन् लोकान् महदाद्यान् महाद्युतीन्।
सृष्टोऽग्निर्मुखतः पूर्वं लोकानां हितकाम्यया॥
यस्मादग्रे स भूतानां सर्वेषां निर्मितो मया।
तस्मादग्नीत्यभिहितं पुराणज्ञैर्महर्षिभिः॥
यस्मात्तु सर्वकृत्येषु पूर्वमस्मै प्रदीयते।
आहुतिर्दीप्यमानाय तस्मादग्नीति कथ्यते॥
यस्माच्च नयति ह्यग्रां गतिं विप्रान् सुपूजितान्।
तस्माच्च नयनाद्राजन्! वेदेष्वग्नीति प्रोच्यते॥
यस्माच्च दुर्हुतान् सोऽपि मन्त्रहीनान् स्वकात्।
यजमाना नरश्रेष्ठ! क्रव्यादोऽग्निस्तु न स्थितः॥
सर्वभूताधिपो राजन्! देवानामेष वै मुखम्।
प्रथमं समुत्पन्नः सृष्टो लोकार्थं पद्मनप्रभुः॥
एकस्मात्तु जगत्सर्वं सुकर्मैव यत्र गम्य।

ततः प्रशमितः सोऽग्निरूपः स मायया पुरा ॥
सुतादुपासनात् सोऽयमौपासन इति स्मृतः ।
आकृतिः सर्वमाख्यातस्तस्मिन् वसति योऽनलः ।
आवसथ इति ख्यातस्तेनासौ ब्रह्मवादिभिः ॥
तस्मिन् पञ्च महायज्ञा वर्त्तन्ते यस्य धर्मतः ।
सोममण्डलमध्येन गतिस्तस्य द्विजन्मनः ॥
तेन सप्तर्षयः सिद्धाः संयतेन्द्रियबुद्धयः ।
गतात्मभासा युज्यन्ते मैत्राग्नेयश्च तत्पराः ॥
अपरे चावसथ्यन्तु पचनाग्निं प्रचक्षते ।
तस्मिन् पञ्च महायज्ञा वैश्वदेवश्च वर्त्तते ॥
स्थालीपाकाश्च गृह्याश्च सर्वे तस्मिन् प्रतिष्ठिताः ।
गृह्यकर्मवह्नी यस्माद् ततो गृहपतिस्तु सः ॥
औपासनश्चावसथ्य सभ्यं पचनपावकम् ।
आहुर्ब्रह्मविदः केचिदेतमेव समापि च ॥
अग्निहोत्रप्रकारन्तु शृणु राजन् ! समाहितः ।
त्रयाणां गणानामपि अग्नीनामुच्यते मया ॥
गृहाणान्तु पतित्वाद्धि गार्हपत्यमिति स्मृतम् ।
यजमानन्तु यस्मात्तु दक्षिणान्तु गति नयेत् ॥
दक्षिणाग्निं तदाहुस्ते दक्षिणत्वाच्च तद्विदः ।
आहुतीः सर्वमाख्यातं हवनं हव्यवाहनम् ॥
आहूय योऽग्निं नियत यथाहवनमरतः ।
आभिमुख्येन होमस्तु यस्माद्यज्ञेषु वर्त्तते ॥
तेनाप्याहवनीयश्च गतोवह्निर्महाद्युतिः ।

आहोमादग्निहोत्रेषु यज्ञे ये यत्र सर्वशः ॥
यस्मादस्मिन् प्रवर्त्तन्ते ततोह्याहवनीयता ।
आवसथन्तु येनाग्निं पचनाग्निं प्रचक्षते ॥
तेषां सभागतोवह्निः सभ्यइत्यभिधीयते ।
आवसथ्यस्तु यो वह्निः प्रथमं स प्रजापतिः ॥
ब्रह्मा वै गार्हपत्योऽग्निः साक्षाद्देवो हि वा भवेत् ।
दक्षिणाग्निः स्वयं रुद्रः क्रोधात्मा चण्ड एव सः ॥
अहमाहवनीयोऽग्निः रन्तरीक्षञ्च दक्षिणः ।
स्वर्गमाहवनीयोऽग्निरेवमग्नित्रयं स्मृतम् ॥
हन्तो वै गार्हपत्योऽग्निः यस्माद्वृत्ता च मेदिनी ।
अर्द्धचन्द्राकृतिः खं वै दक्षिणाग्निः स्थाया भवेत् ॥
चतुरस्रं ततः स्वर्गं निर्मलं ह्यग्निसन्निभम् ।
तस्मादाहवनीयोऽग्निः चतुरस्रो भवेच्च यः ॥
जुहुयाद्गार्हपत्ये यो भुवं जयति स द्विजः ।
जुहुयाद्दक्षिणाग्नौ यः स जयत्यन्तरीक्षकम् ॥
पृथिवीमन्तरीक्षं वा दिवस्वगणैः सह ।
जयत्याहवनीये यो जुहुयाद्धीमान् द्विजः ॥

त्रयाणामपि वह्नीनामग्निहोत्रमिति स्मृतम् ।
त्राणाद्वै यजमानस्य चाग्निहोत्रमिति स्मृतम् ॥
होदृत्येष विवादो वै विषादो दुःखमुच्यते ।
दुःखं तापत्रयं प्रोक्तं तापो हि नरकं विदुः ॥
यस्मात्त्राणायते दुःखाद्यजमानं हुतोऽनलः ।
तस्मात्तु विधिवत्प्रोक्तमग्निहोत्रमिति श्रुतम् ॥
तदग्निहोत्रं सृष्टं वै ब्रह्मणा लोककारिणा ।
वेदाश्चाप्यग्निहोत्रार्थं जज्ञिरे स्वयमेव तु ॥
अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला नारी दानहोमफलं धनम् ॥
त्रिवेदमन्त्रसंयोगादग्निहोत्रं प्रवर्त्तते ।
ऋग्यजुःसामभिः पुण्यैः स्थाप्यते सूत्रसंयतैः ॥
वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप ।
वसन्तो ब्राह्मणः प्रोक्तो ब्रह्मयोनिः स उच्यते ॥
अग्न्याधानन्तु येनाथ वसन्ते क्रियते नृप ।
तस्य श्रीर्ब्रह्मपुष्टिश्च ब्राह्मणस्य विवर्द्धते ॥
ऋतवः सर्व एवैते त्रिभिर्वेदैरलङ्कृताः ।
अग्निहोत्राः प्रवर्त्तन्ते यैरिदं ध्रियते जगत् ॥
ग्राम्यारण्याश्च पशवस्तथा वृक्षास्तृणानि च ।
फलान्योषधयश्चापि चाग्निहोत्रकृतेऽभवन् ॥
रसाः स्नेहास्तथा गन्धा रत्नानि मणयस्तथा ।
काञ्चनादीनि लोहानि चाग्निहोत्रकृतेऽभवन् ॥
आयुर्वेदो धनुर्वेदो मीमांसा न्यायविस्तरः ।

आहोमादग्निहोत्रेषु यज्ञेये यत्र सर्वश ॥
यस्मादस्मिन् प्रवर्त्तन्ते ततोह्याहवनीयता ।
आवसथन्तु येत्वाग्नि पंचनाम्नि प्रचक्षते ॥
तेषा सभागतोवह्निः सभ्यइत्यभिधीयति ।
आवसथ्यस्तु यो वह्निः प्रथम स प्रजापतिः ॥
ब्रह्मा वै गार्हपत्योऽग्नि स्तस्मादेषो हि वा भवेत् ।
दक्षिणाग्नि स्वय रुद्रः क्रोधात्मा चण्ड एव स ॥
अहमाहवनीयोऽग्नि रन्तरीक्षश्च दक्षिणः ।
स्वर्गमाहवनीयोऽग्निरेव मग्नित्रय स्मृतम् ॥
हन्तो वै गार्हपत्योऽग्नि र्यस्माद्वृत्ता च मेदिनी ।
अर्द्धचन्द्राकृतिः ऋ वै दक्षिणाग्नि स्तथा भवेत् ॥
चतुरस्रं तत स्वर्गं निर्मल ह्याग्निसन्निभम् ।
तस्मादाहवनीयोऽग्नि श्चतुरस्रो भवेन्नृप ॥
जुहुयाद्गार्हपत्य यो भुव जयति स द्विजः ।
जुहुयाद्दक्षिणाग्निं य, स जयत्यन्तरीक्षकम् ॥
पृथिवी मन्तरीक्ष वा दिवश्चगणै: सह ।
जयत्याहवनीय यो जुहुयाद्भक्तिमान् द्विज. ॥
यस्त्वावसथ्ये जुहुयात्पञ्चाग्नि विधिवद्द्विज. ।
सच सर्वांल्लोकेषु भयलोकः प्रमोदते ॥

त्वयाप्यपि वह्नीनामग्निहोत्रमिति स्मृतम्।
त्रायते यजमानस्य चाग्निहोत्र मिति स्मृतम्॥
होरित्येष विवादो वै विषादो दुःखं मुच्यते।
दुःख तापत्रयं प्रोक्तं तापो हि नरकं विदुः॥
यस्माद्वा त्रायते दुःखाद्यजमानं ततोऽनलः।
तस्मात्तु विधिवत्प्रोक्तमग्निहोत्रमिति श्रुतम्॥
तदग्निहोत्रं सृष्टं वै ब्रह्मणा लोककारिणा।
वेदाश्चाप्यग्निहोत्रार्थं जज्ञिरे स्वयमेव तु॥
अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम्।
रतिपुत्रफला नारी दानभोगफलं धनम्॥
त्रिवेदमन्त्रसंयोगादग्निहोत्रं प्रवर्त्तते।
ऋग्यजुःसामभिः पुण्यैः स्थाप्यते स्तुतसंयतैः॥
वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप।
वसन्तो ब्राह्मणः प्रोक्तो ब्रह्मयोनिः स उच्यते॥
अग्न्याधानन्तु येनाथ वसन्ते क्रियते नृप।
तस्य श्रीर्ब्रह्मवृद्धिश्च ब्राह्मणस्य विवर्द्धते॥
ऋतवः सर्व एवैते त्रिभिर्वेदैरलङ्कृताः।
अग्निहोत्राः प्रवर्त्तन्ते यैरिदं ध्रियते जगत्॥
ग्राम्यारण्याश्च पशवस्तथा वृक्षास्तृणानि च।
फलान्योषधयश्चापि चाग्निहोत्रफलेऽभवन्॥
रसाः स्नेहास्तथा गन्धा रत्नानि मणयस्तथा।
काञ्चनादीनि लोहानि चाग्निहोत्रफलेऽभवन्॥
आयुर्वेदो धनुर्वेदो मीमांसा न्यायविस्तरः।

धर्मशास्त्रञ्च तत्सर्वं मग्निहोत्रकृतेऽभवत् ॥
छन्दः शिक्षाय कल्पाय तथा व्याकरणं नृप ।
ज्योतिर्ज्ञानं निरुक्तञ्च ह्यग्निहोत्रकृते कृतम् ॥
इतिहासपुराणञ्च गाथाश्चोपनिषत्तथा ।
आथर्वणानि कर्माणि ह्यग्निहोत्रकृतेऽभवन् ॥
यच्चैतस्याः पृथिव्यां हि किञ्चिदस्ति चराचरम् ।
तत्सर्वं मग्निहोत्रस्य कृते सृष्टं स्वयम्भुवा ॥
अग्निहोत्रस्य दर्शस्य पौर्णमासस्य चाप्यथ ।
यूपेष्टिपशुबन्धानां सोमपानक्रियावताम् ॥
तिथिनक्षत्रयोगानां मुहूर्तकरणात्मनाम् ।
कालानां वेदनार्थन्तु ज्योतिर्ज्ञानं कृतं पुरा ॥
ऋग्यजुःसाममन्त्राणां लोकविस्तार्थचिन्तनात् ।
मत्यापत्तिविकल्पार्थं छन्दोज्ञानं प्रकल्पितम् ॥
वर्णाक्षरपदार्थानां सुधिं लिङ्गविभक्तितः ।
नामधातुविवेकार्थं पुरा व्याकरणं कृतम् ॥
यूपवेद्यम्बराधन्तु मोक्षणं यजनाय तु ।
यज्ञदैवतयोगार्थं शिक्षाज्ञानं प्रकल्पितम् ॥
यज्ञपात्रपवित्रार्थं द्रव्यसम्भरणाय च ।
सर्वयज्ञविकल्पाय पुरा तुल्यं प्रकल्पितम् ॥
नाममन्त्रविभक्तानां तत्त्वार्थनियमाय च ।
सर्ववेदनिरुक्तञ्च निरुक्तं ऋषिभिः कृतम् ॥
वेद्यर्थं पृथिवी सृष्टा सम्भारार्थं तथैव च ।
इध्मार्थञ्च यूपार्थं ब्रह्मा चक्रे वनस्पतीन् ॥

ग्राम्यारण्याश्च पशवः स्मृयन्ते यज्ञकारणात् ।
मन्त्राणां विनियोगश्च प्रोक्षणं श्रवणं तथा ॥
अनुयाजप्रयाजांश्च मरुतां शासिनस्तथा ।
उद्गातृश्चैव साम्नां वै वह्निप्रस्थानमेव च ॥
विष्णुक्रमाणां क्रमणं दक्षिणाभ्रमतं तथा ।
त्रिकालं चैव भूमिश्र ? स्थानपूपश्तस्तथा ॥
अवघ्नमोचणञ्चैव हविषां श्रवणस्तथा ।
नावतुल्यन्ति ये विप्रा निवृत्ताये पशोर्वधम् ॥
ते यान्ति नरकं घोरं रौरवं तमसावृतम् ।
शतवर्षसहस्राणि तत्र स्थित्वा नराधमाः ॥
क्रिमिभि र्भक्ष्यमाणाश्च तिष्ठेयुः पूयशोणिते ।
यूपास्तु ब्रह्मसत्कारै रौपध्य पशवस्तथा ॥
यजमानेन सहिता स्वर्गं यान्ति नरेश्वर ! ।
यावत्कालं हि यज्ञो वै स्वर्गलोके महीयते ॥
तावत्कालं प्रमोदन्ते पशवोऽध्वरे हताः ।
तृणा यूपत्वमिच्छन्ति पशुत्वं पशवस्तथा ॥
तृणा इच्छन्ति दर्भत्वं मोषध्यश्च हविस्तताम ।
सोमत्वश्च लता सर्वा वेदित्वञ्च वसुन्धरा ॥
यस्मात्पशुत्वमिच्छन्ति पशवः स्वर्गनिष्पृया ।
तस्मात्पशुवधे हिंसा नास्ति यज्ञेषु माण्डव ! ॥
अहिंसा वैदिकं कर्म ब्रह्मकर्मेति तत् स्मृतम् ।
वेदोक्तं ये न कुर्वन्ति हिंसाबुध्या क्रतुं द्विजाः ॥
सद्यः शूद्रत्वमायान्ति प्रेत्य चण्डालतामपि ।
गावो यज्ञार्थं सत्यक्ता दक्षिणार्थं तथैव च ॥

सुवर्णं रजतञ्चैव पात्रिकं भार्यमेव च ।
दर्भसंस्करणार्थन्तु रक्षसां रक्षणाय च ॥
यजनार्थं द्विजाः सृष्टा स्वारक्षां भुवि दैवताः ।
क्षत्रियाः रक्षणार्थन्तु वैश्या वार्तानिमित्तः ॥
शुश्रूषार्थं त्रयाणान्तु शूद्राः सृष्टाः स्वयम्भुवा ।
एवमेतत् जगत्सर्वं मग्निहोत्रकृते कृतम् ॥
नावबुध्यन्ति ये वैतद्दीर्घमन्तस्समाहृतम् ।
ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम् ॥
रौरवादिमुमुक्तास्तु कृमियोनिं व्रजन्ति ते ।
यथोक्तमग्निहोत्राणि शुश्रूषन्ति च ये द्विजाः ॥
तैस्तु दत्तं हुतं तप्तं जप्तमध्यापितं भवेत् ।
एवमिष्टञ्च पूर्तञ्च यद्द्विजैः क्रियते नृप ! ॥
तत्सर्वं सम्यगाहृत्य चादित्ये स्थापयाम्यहम् ।
मया स्थापितमादित्ये लोकस्य सुकृतं हि यत् ॥
तारयेत्तत् सहस्रांशुः सुकृतं ह्यग्निहोत्रिणाम् ।
तावत्तेषां हि पुण्येन दीप्यते रविरम्बरे ॥
स्वर्गे स्वर्गं गतानान्तु वीर्याद्भवति वीर्यवान् ।

होतव्यं विधिवद्राजन्नूर्ध्वमिच्छन्ति ते गतिम् ।
अनृज्यं खल्वमेतस्मादग्निहोत्रं युधिष्ठिर ! ॥
न त्याज्यमप्येतद्धुत्वा होतव्यं द्विजातिभिः ।
ह्रुत्वेऽप्यग्निहोत्रं ये जुह्वन्ति विधिवद्द्विजाः ॥
शूद्रान्नाद्विरताः सन्तः संयतेन्द्रियबुद्धयः ।
पञ्चयज्ञपरा नित्यं क्रोधलोभविवर्जिताः ॥
द्विकालमतिथिञ्चैव पूजयन्ति च भक्तितः ।
तेऽपि सूर्योदयप्रख्यैर्विमानैर्वायुवेगिभिः ॥
मम लोके प्रमोदन्ते दृष्ट्वा मान्वयुधिष्ठिर ! ।
मन्वन्तरस्य तत्रैकं मोदित्वा द्विजसत्तमाः ॥
इह मानुष्यके लोके भवन्ति द्विजपुङ्गवाः ।
बाला हिताग्नयो ये च शूद्रान्नाद्विरताः सदा ॥
क्रोधलोभविनिर्मुक्ताः प्रातःस्नानपरायणाः ।
यथोक्तमग्निहोत्रं ये जुह्वते संयतेन्द्रियाः ॥
सतिष्ठेद्वा सदा सौम्यो द्विकालं मत्परायणाः ।
ते यान्त्यपुनरावृत्तिं भित्त्वा चादित्यमण्डलम् ॥
मम लोकं सपत्नीका यानैः सूर्योदयप्रभैः ।
तत्र बालाः ससंस्काराः कालगाः कामरूपिणः ॥
ऐश्वर्यगुणसम्पन्नाः क्रीडन्ति च यथासुखम् ।
इत्येषा ह्याहिताग्नीनां विभूतिः पाण्डुनन्दन ! ॥
ये च वेदच्युतिं केचित् निन्द्यमाना ह्यबुद्धयः ।
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे पञ्चदशोऽध्यायः ।

---

## षोडशोऽध्यायः ।

युधिष्ठिरः । चक्रायुध ! नमस्तेऽस्तु देवेश ! गरुड़ध्वज ! ।
चान्द्रायणविधिं शुद्धं साख्याहि भगवन्मम ॥
भगवानुवाच । शृणु पाण्डव ! तत्त्वेन सर्वपापप्रणाशनम् ।
पापिनो येन शुद्ध्यन्ति तच्चे वक्ष्यामि सर्वशः ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाचरितव्रतः ।
यथावत्कर्तुकामो यस्तस्य यं प्रथमन्तु यः ।
शोधयेत्तु शरीरं स्वं पञ्चगव्येः पवित्रितः ॥
सशिरः कर्तुं पक्षान्तं ततः कुर्वीत पावनम् ।
शुक्लवासाः शुचिर्भूत्वा मौञ्जीं बध्नीत मेखलाम् ॥
मालाश्चदण्डमादाय ब्रह्मचारीव्रते स्थितः ।
कृतोपवासः पूर्वन्तु शुक्लप्रतिपदि द्विजः ॥
नदीसङ्गमतीर्थेषु शुचौ देशे गृहेऽपि वा ।
गोमयेनोपलिप्तेऽथ स्थण्डिलेऽग्निं निधापयेत् ॥
आघारावाज्यभागौ च प्रणवं व्याहृतिस्तथा ।
वारुणश्चापि पञ्चैव हुत्वा सर्वान्यथाक्रमम् ॥
सत्याय विष्णवे चेति ब्रह्मर्षिभ्योऽथ ब्रह्मणे ।
विश्वेभ्यश्चैव देवेभ्योऽथ प्रजापतये तथा ॥
षट् पञ्च जुहुयात्पश्चात्प्रायश्चित्ताहुतीर्द्विजः ।
ततः समापयेदग्निं शान्तिं कृत्वाथ पौष्टिकम् ॥
प्रणम्याग्निञ्च सोमञ्च भस्म दत्त्वा तथात्मनः ।
नदीं गत्वा विविक्ताना सोमाय वरुणाय च ॥
आदित्याय ततः स्नायादन्तं हत्वा समाहितः ।

शुचिर्वोदकमाचम्य स्वाधीनः पूर्वतोमुखः ॥
प्राणायामस्ततः कृत्वा पवित्रैरभिषेचनम्।
आचान्तस्त्वभिवीक्षेत चोर्द्ध्वबाहुर्दिवाकरम् ॥
कृताञ्जलिरुपस्थान्तः कुर्य्याच्चापि प्रदक्षिणम्।
नारायणं वा रुद्रं वा स्वाध्याय ब्राह्मणस्तथा ॥
आरण्यं मम सूक्तं वा प्राक् भोजनमथापि वा।
वीरघ्नवृषभस्यापि तथावाप्यघमर्षणम् ॥
गायत्रीं मम वा देवीं सावित्रीं वा जपेत्ततः।
शतं वाष्टशतं वापि सहस्रमथवा परम् ॥
ततो मध्याह्नकाले वै पायसं यावकन्तु वा।
पाचयित्वा प्रयत्नेन प्रयतः सुसमाहितः ॥
ततः पात्रं समादाय सौवर्णं राजतन्तु वा।
ताम्रं वा मृण्मयं वापि औदुम्बरमथापि वा ॥
वृक्षाणां याज्ञियानाम् पर्णैरार्द्रैरकुत्सितैः।
पुटकेन तु शुभ्रेण चरेद्भैक्षं समाहितः ॥
ब्राह्मणानां गृहाणान्तु सप्तानामपरं व्रजेत्।
गोदोहमात्रन्तिष्ठेत्तु वाग्यतः संयतेन्द्रियः ॥
न हसेन्न न वीक्षेत नाभिभाषेत वा स्त्रियम्।
विष्ठामूत्रपुरीषञ्च चण्डालं वा रजस्वलाम् ॥
पतितञ्च तथाध्वानमादित्यमवलोकयेत्।
यो हि यादृक्कमारभ्य सर्वदा प्रचरेद्द्विजः ॥
तद्दृष्ट्वा पापकर्माणमादित्यमवलोकयेत्।
ततश्चावसथं प्राप्तो भिक्षान्निक्षिप्य भूतले ॥
प्रक्षाल्य पादावाचम्य हस्तौ वा ...

आचम्य वारुणान्तेन वह्निं विमाद्य पूजयेत् ॥
पञ्च सप्ताथ वा कुर्याद्भागान् भैक्षस्य तस्य वै ।
तेषामन्यतमं पिण्डमादित्याय निवेदयेत् ॥
ब्रह्मणे चाग्नये चैव सोमाय वरुणाय च ।
विश्वेभ्यश्चैव देवेभ्यो ह्यादित्याय यथाक्रमम् ॥
अवशिष्टमथैकन्तु वक्तु मात्रं प्रकल्पयेत् ।
अङ्गुल्यये स्थितं पिण्डं जायते चाभिमन्त्रयेत् ॥
अङ्गुलीभिस्त्रिभिः पुण्यं प्राश्नीयात्प्राङ्मुखः पुनः ।
यथाच वर्धते सोमो ग्रसते च तथा पुनः ॥
तथा पिण्डाश्च वर्धन्ते ह्रसन्ते च दिने दिने ।
त्रिकालस्नानमस्योक्तं द्विकालमथवा सकृत् ॥
ब्रह्मचारी सदा चापि न च वस्त्रं प्रपीडयेत् ।
स्थाने च दिवसे तिष्ठेत् रात्रौ वीरासनं व्रजेत् ॥
भवेत् स्थण्डिलशायी वा ह्यथवा वृक्षमूलकः ।
वल्कलं यदिवा चौमं शाणकार्पासकन्तथा ॥
आच्छादनं भवेत्तस्य वस्त्रार्थं पुरुषर्षभ ।
एवञ्चान्द्रायणे पूर्णे मासस्यान्ते युधिष्ठिर ॥
ब्राह्मणान् भोजयेद्भक्त्या दद्याच्चैव तु दक्षिणाम् ।
चान्द्रायणेन चीर्णेन यत्कृतन्तेन दुष्कृतम् ।
तत्सर्वन्तत्क्षणादेव भस्मीभवति काष्ठवत् ।
ब्रह्महत्याच गोहत्या सुवर्णस्तेन्यमेव तु ॥
भ्रूणहत्या सुरापानं गुरोर्दारव्यतिक्रमः ।
एवमन्यानि पापानि पतनीयानि यानि च ॥
चान्द्रायणेन नश्यन्ति वायुना पांशवो यथा ।

अनिर्दशाया गोः क्षीरमौष्ट्रमाविकमेव च ॥
मृतकसूतकयोश्चान्नं भुक्त्वा चान्द्रायणञ्चरेत् ।
सुरामांसामिषं सर्पिर्लाक्षा लवणमेव च ॥
तैलं सोमञ्च विक्रीणन् द्विजश्चान्द्रायणञ्चरेत् ।
एकोद्दिष्टञ्च योभुङ्क्ते योभुङ्क्ते वासनस्थितं ॥
भिन्नभाण्डेतु योभुङ्क्ते द्विजश्चान्द्रायणञ्चरेत् ।
आकाशस्थितहस्तोय आसनस्थस्तथैव च ॥
परहस्तस्थितश्चैव भुक्त्वा चान्द्रायणञ्चरेत् ।
आसनस्थश्च योभुङ्क्ते शयनीयगतोऽपि वा ॥
योभुङ्क्ते वासनस्थस्तु द्विजश्चान्द्रायणञ्चरेत् ।
यो भुङ्क्तेऽनुपनीतेन यो भुङ्क्ते च स्त्रिया सह ॥
योभुङ्क्ते अन्यया सार्द्धं द्विजश्चान्द्रायणञ्चरेत् ।
उच्छिष्टं स्थापयेद्विप्रो योमोहाद्भोजनान्तरे ॥
दद्याद्वा यदि मोहाद्द्विजश्चान्द्रायणञ्चरेत् ।
तुम्ब कोशातकञ्चैव पलाण्डुं गृञ्जनन्तथा ॥
छत्राकं लशुनञ्चैव जग्ध्वा चान्द्रायणञ्चरेत् ।
तथा पर्युषितं चान्नं पक्वं परगृहागतम् ॥
द्विपक्षञ्च दधिमासं जग्ध्वा चान्द्रायणञ्चरेत् ।
उदक्या च शुना वापि चण्डालैर्वा नराधिप ॥
स्पृष्टमन्नन्तु भुञ्जानो द्विजश्चान्द्रायणञ्चरेत्।
एतत्परं हि पुण्यश्च पवित्रं परमं व्रतम् ॥
पावनं सर्वपापानां पुण्यं पाण्डव । चोत्तमम् ।
एतेन यशसो ह्यत्र आदित्याय दिवङ्गता ॥
एतदाद्य परं गुह्यं पवित्रं पावनं शुभम् ।

यथोक्तमेतद्यः कुर्य्याद्द्विजः पापप्रणाशनम् ।
स दिवं याति पूतात्मा निर्मलादित्यसन्निभः ॥
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे षोड़शोऽध्यायः ।

## सप्तदशोऽध्यायः ।

वैशम्पायनः । केशवेनैवमाख्याते चान्द्रायणविधिक्रमे ।
पप्रच्छ पुनरप्यन्यान् धर्मान् धर्मात्मजो नृपः ॥
युधिष्ठिरः । सर्वभूतहिते श्रीमन् ! सर्वभूतनमस्कृत ! ।
सर्वभूतहितं धर्मं सर्वज्ञ ! कथयस्व मे ।
यद्दरिद्रजनस्यापि स्वर्गं सुखकरं भवेत् ॥
सर्वपापप्रशमनं तत् शृणुष्व युधिष्ठिर ! ।
कार्त्तिकाद्यास्तु ये मासा द्वादशैव प्रकीर्त्तिताः ॥
तेष्वेकभक्तनियमः सर्वेषां सुच्यते मया ।
कार्त्तिके यस्तु वै मासे श्रद्धया संयतो नरः ॥
एकभुक्तेन मद्भक्तो मासमेकं तु वर्त्तते ।
जलमात्रं पिबेत्रासौ नान्तराभोजनात्परम् ।
आदित्यरूपमांश्चापि नित्यमध्ये समाश्रितः ॥
व्रतान्ते भोजयेद्विप्रान् दक्षिणाञ्चापि तत्पुनः ।
क्रोधलोभविमुक्तस्य तस्य पुण्यफलं शृणु ॥
विधिवत्कपिलादाने यत्पुण्यं समुदाहृतम् ।
तत्पुण्यं समनुप्राप्य सूर्य्यलोके महीयते ॥
ततश्चापि च्युतः कालात् मानुषेषूपजायते ।
तत्र प्रकामं क्रीडित्वा सर्वलोकेषु पूजितः ॥

राजराजोऽसितोविप्र. कोटीधनपतिर्भवेत् ।
मार्गशीर्षे तु यो मासे एकभुक्तेन वर्त्तते ॥
कामं क्रोधञ्च लोभञ्च परित्यज्य यथाविधि ।
स्नात्वा चादित्यरूप मा मर्च्चयन्ति यतेन्द्रियाः ॥
जपन्नेवतु गायत्रीं मामिकां वाग्यतः शुचिः ।
मासे परिसमाप्ते तु भोजयित्वा द्विजान् शुचीन् ॥
तानर्च्चयन्ति मद्भक्त्या तस्य पुण्यफलं शृणु ।
अग्निहोत्रे कृतं पुण्य माहिताग्नेस्तु यद्भवेत् ॥
तत्पुण्यफलमाप्नोति यानेनाम्बरयोगिना ।
सप्तर्षिलोके चरति यथाकाम यथासुखम् ॥
ततश्चापि च्युतः कालाद्धरिवर्षेषु जायते ।
तत्र प्रकामं क्रीड़ित्वा राजा पश्चाद्भविष्यति ॥
पौषमासं क्षपेद्यस्तु मेकभक्तेन यो नरः ।
अर्च्चयेत्तु च मां नित्य मद्भक्तेनान्तरात्मना ॥
अहिंसासत्यनिरत. क्रोधहर्षविवर्जित: ।
एव युक्तस्य राजेन्द्र । शृणुयाः फलमुत्तमम् ॥
विप्रातिथ्यसहस्रे तु यत्पुण्य समुदाहृतम् ।
तत्फल समनुप्राप्तः शक्रलोके महीयते ॥
अवतीर्णा स्ततः कालाद्भिलावर्षेषुजायते ।
तत्र स्थित्वा चिर काल सिद्ध विप्रो भविष्यति ॥
माघमासन्तथा यस्तु वर्त्तते चैकभुक्ततः ।
मदर्चनपरो भूत्वा दम्भक्रोधविवर्जित. ।
मामिका मपि गायत्रीं सन्ध्यायां तु जपेद्द्विजः ॥
दध्वा तु दक्षिणामन्ते भोजयित्वा द्विजानपि ।

नमस्करोति तान् भक्त्या मद्गतेनान्तरात्मना ॥
त्रिकालस्नानयुक्तस्य तस्य पुण्यफलं शृणु।
नीलकण्ठमयूरेण यानेनैवसचरो भवेत्॥
पितृलोकं पूजयित्वा सेव्यमानोऽप्सरोगणैः।
तत्र प्रकाम क्रीडित्वा भद्रस्वेपूपजायते ॥
तत्र च्युतश्चतुर्वेदी विप्रो भवति भूतले।
क्षपेत् फाल्गुनंमास य एकभक्तेन संयतः॥
नमो ब्रह्मण्यदेवायेत्यजस्रं विजपन् सदा।
पायसं भोजयेद्विप्रान् मासान्ते संयतेन्द्रियः॥
मदर्चनपरः क्रोधलोभमोहविवर्जितः।
सदाचारव्रतपरस्तस्य पुण्यफलं शृणु॥
विमानैः सारसैर्युक्तमारूढः कामगं सुधन्।
नक्षत्रलोके रमते सर्वनक्षत्रशोभितः॥
ततश्चापि च्युतः कालात् केतुमालेषु जायते।
तत्र प्रकामं क्रीडित्वा मानुषे नृपतिर्भवेत्॥
चैत्रमासेषु योमर्त्य एकभुक्तेन वर्त्तते।
ब्रह्मचारी तु मद्भक्तस्तस्य पुण्यफलं शृणु॥
यदग्निष्टोमे यः पुण्यं यथोक्तव्रतचारिणः।
तत्पुण्यफलमासाद्य चन्द्रलोके महीयते॥
ततोऽवतीर्णो जायेत वर्षे रमणके पुनः।
भुक्त्वा काममनन्तसौख्यं इह राजा भविष्यति॥
वैशाखे यस्तु वै मासं मेकंभुक्तेन वर्त्तते।
द्विजमध्यासने स्नात्वा भुञ्जन् भूमौ च वाग्यतः॥
नमो ब्रह्मण्यदेवायेत्यर्चयित्वा दिवाकरम्।

दत्वान्ते भोजयेद्विप्रांस्तस्य पुण्यफल शृणु॥
फल यद्विधिवत्प्रोक्त मग्निष्टोमातिरात्रयो ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥
ततो हैमवते वर्षे जायते कान्नपर्वपादू ।
तत्र प्रकाम सौहित्यो विप्र पश्चाद्भविष्यति ॥
ज्येष्ठमासे तु यो राजन्नेकभक्तेन वर्तते । •
विप्रमग्रासक कृत्वा भूमौ भुञ्जन् जितेन्द्रिय: ।
नमो ब्रह्मण्यदेवायेत्यर्चयन्मा समाहित: । •
दम्भाद्दतविनिर्मुक्तस्तस्य पुण्यफल शृणु ।
चीर्णे चान्द्रायणे सम्यक् यत्पुण्य समुदाहृतम् ॥
तत्पुण्यफलमासाद्य देवलोके महीयते ।
अथोत्तरकुरुष्वेव जायते निर्गतस्तत: ॥
ततश्चापि च्युत कान्नादिह लोके द्विजो भवेत् ।
आषाढमास यो राजन्नेकभुक्तेन वर्तते ॥
ब्रह्मचारी जितक्रोधो मदर्चनपरायण: ।
विप्रमग्रासने कृत्वा भुञ्जन् भूमौ जितेन्द्रिय: ॥
कृत्वा विप्रगणस्नान यथाविधानत ।
दत्वान्ते भोजयेद्विप्रान् पायसेन युधिष्ठिर ।॥
गुडौदनेन वा राजन्नस्य पुण्यफल शृणु ।
कपिनामतद्दत्तस्य यत्पुण्य पाण्डुनन्दन ।॥
तत्पुण्यफलमासाद्य देवलोके महीयते ।
ततोऽवतीर्ण: कालेन शाकद्वीपे प्रजायते ॥
तत्रापि च्युत. कालादिह विप्रो भविष्यति ।
श्रावणं य. पदेनमासमेकं भक्ते न संयत ।

नमो ब्रह्मण्यदेवायेत्युक्त्वा गां समर्चयेत्सदा ।
विप्रमग्रासने कृत्वा भूमौ भुञ्जन्यथाविधि ॥
पायसेनार्चयन्विप्रान् जितक्रोधो जितेन्द्रियः ।
लोभमोहविनिर्मुक्तस्तस्य पुण्यफलं शृणु ॥
कपिलाशतस्य यत्पुण्यं विधिदत्तस्य वासव ।
तत्पुण्यं समनुप्राप्य शक्रलोके महीयते ॥
ततश्चापि च्युतः कालात् कुशद्वीपे प्रजायते ।
तत्र प्रकामं क्रीडित्वा विप्रो भवति मानुषे ॥
यस्तु भाद्रपदं मासमेकभुक्तेन वर्तते ।
ब्रह्मचारी जितक्रोधः सत्यसन्धो जितेन्द्रियः ॥
विप्रमग्रासने कृत्वा पाकभेदविवर्जितः ।
नमो ब्रह्मण्यदेवायेत्युक्त्वा सुचरणौ स्पृशेत् ॥
तिलान्वाथ घृतं वापि व्रतान्ते दक्षिणां दिशेत् ।
सद्भक्तस्य नरश्रेष्ठ तस्य पुण्यफलं शृणु ॥
यत्फलं विधिवत्प्रोक्तं राजसूयाश्वमेधयोः ।
तत्पुण्यफलमासाद्य शक्रलोके महीयते ॥
ततश्चापि च्युतः कालाज्जायते धनदालये ।
तत्र प्रकामं क्रीडित्वा राजा भवति मानुषे ॥
यश्चाप्याश्वयुजं मासमेकभुक्तेन वर्तते ।
यज्ञायती जपन्नित्यं मन्त्रेणानन्तरात्मना ॥
स्निग्धं वा विरूक्षं वा ग्रासमद्यमन्तु वा ।
विप्रमग्रासने कृत्वा संयतेन्द्रियमानसः ॥
व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु ।
धनुर्निधेन यत्पुण्यं विधिवत्पाकशासन ॥

तत्पुण्यफलमासाद्य मम लोकेऽभिपूज्यते ।
ततश्चापि च्युतः कालात् स्वे तस्मिन् प्रजायते ॥
तत्र भुक्त्वा महान् भोगांस्तत्र विप्रो हि जायते ।
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे सप्तदशोऽध्यायः ।

---

## अष्टादशोऽध्यायः ॥

युधिष्ठिर । देव । संवत्सरं पुण्यमेकभुक्तेन यः क्षपेत् ।
तस्य पुण्यफलं यद्वै तन्ममाचक्ष्व केशव ? ॥
भगवानुवाच । शृणु पाण्डव । सत्यं मे वचनं पुण्यमुत्तमम् ।
यच्छ्रुत्वा वाथ कृत्वा वा नरः पापैर्विमुच्यते ॥
एकभुक्तेन वर्तेत नरः संवत्सरन्तु यः ।
ब्रह्मचारी क्षमी शान्तो जितक्रोधो जितेन्द्रियः ॥
शुचिः स्नानरतोऽव्यग्रः सत्यवागनसूयकः ।
अर्चयेच्चैव तु मां नित्यं मद्गतेनान्तरात्मना ॥
सन्ध्ययोस्तु जपेन्नित्यं गायत्रीं समाहितः ।
नमो ब्रह्मण्यदेवायेत्यष्टसंख्यां प्रणम्य च ॥
विप्रमग्रासने कृत्वा यावकं भैक्षमेव वा ।
भूत्वा तु वाग्यतो भुक्त्वा वाचयित्वा द्विजन्मनः ॥
नमोऽस्तु वासुदेवायेत्युक्त्वा तु चरणं स्पृशेत् ।
मासे मासे समाप्ते तु भोजयित्वा द्विजं शुचीन् ।

तस्य पुण्यफलं राजन् । कथ्यमानं मया शृणु ॥
दशजन्मकृतं पापं ज्ञानतोऽज्ञानतोऽपि वा ।
तद्विनश्यति तस्याशु नात्र कार्या विचारणा ॥
युधिष्ठिरः । सर्वेषामुपवासानां यच्च यत् सुमहाफलम् ।
तन्मे श्रेयसे लोके तद्भवान् वक्तुमर्हति ॥
भगवानुवाच । शृणु राजन् ! यथापूर्वं यथाहीनस्तु भारत ! ।
कथान्ते कथयिष्यामि भक्तस्य युधिष्ठिर ! ॥
यस्तु भक्त्या शुचिर्भूत्वा पञ्चम्यां मे नराधिप ! ।
उपवासव्रतं कुर्यात्त्रिकालञ्चार्चयस्तु माम् ॥
सर्वक्रतुफलं लब्ध्वा मम लोके महीयते ।
युधिष्ठिरः । भगवन् ! देवदेवेश ! पञ्चमी नामकातिथिः ॥
तामहं श्रोतुमिच्छामि कथयस्व ममाच्युत ! ॥
भगवानुवाच । पर्वद्वयञ्च द्वादश्यां श्रवणञ्च नराधिप ! ।
मत्पञ्चमीति विख्याता मत्प्रियञ्च विशेषतः ।
तस्माद्भागवतैर्भक्तैर्मन्निवेशितबुद्धिभिः ।
उपवासस्तु कर्तव्यो मत्प्रियाय युधिष्ठिर ! ॥
द्वादश्यामेव वा कुर्यादुपवासमशक्नुवन् ।
तेनाहं परमां प्रीतिं यास्यामि नरपुङ्गव ! ॥
अहोरात्रेण द्वादश्यां मार्गशीर्षे च केशवम् ।
उपोष्य पूजयेद्यो मां सोऽश्वमेधफलं लभेत् ॥
द्वादश्यां पुष्यमासे तु भक्त्या नारायणन्तु माम् ।
उपोष्य पूज्य सद्य मं वाजपेयफलं लभेत् ॥
द्वादश्यां माघमासे तु मामुपोष्य तु माधवम् ।
पूजयेद्यः समाप्नोति पौण्डरीकफलं नृप ! ॥

उपोष्य मां यो वैशाख्या द्वादश्यां मधुसूदन ! ।
पूजयन् फलमाप्नोति सोऽग्निष्टोमस्य पाण्डव ! ॥
द्वादश्यां ज्येष्ठमासे मां समुपोष्य त्रिविक्रमम् ।
अर्चयेद्यः समाप्नोति गवां मेधफलं नृप ! ॥
आषाढे वामनाख्यं मां द्वादश्यां समुपोष्य यत् ।
पूजयेन्नरमेधस्य तत्फलं प्राप्नुयान्नृप ! ॥
द्वादश्यां श्रावणे मासि श्रीधराख्यमुपोष्य माम् ।
पूजयेद्यः समाप्नोति पञ्चयज्ञफलं नृप ! ॥
मासे भाद्रपदे यो मां हृषीकेशाख्यमर्चयेत् ।
उपोष्य पुनराप्नोति सौत्रामणिफलं नृप ! ॥
द्वादश्यामाश्वयुङ्मासे पद्मनाभमुपोष्य माम् ।
अर्चयेद्यः समाप्नोति गोसहस्रफलं नृप ! ॥
द्वादश्यां कार्तिके मासि मां दामोदरसंज्ञितम् ।
उपोष्य पूजयेद्यः स सर्वक्रतुफलं लभेत् ।
केवलेनोपवासेन द्वादश्यां पाण्डुनन्दन ! ॥
फलं यत्पूर्वमुद्दिष्टं तस्यार्द्धं लभते फलम् ।
अथवाप्येवमेवं मां योऽर्चयेद्भक्तिमान्नरः ।
मम सालोक्यमायाति नात्र कार्या विचारणा ।
मासे मासे समभ्यर्च्य योऽर्चरो मामतन्द्रितः ॥
एवं द्वादशवर्षाणि मद्भक्तो मत्परायणः ।
अविघ्न मर्च्चमानस्तु मम सालोक्यमाप्नुयात् ॥
अभ्यर्चेत्प्रीतिमान् सम्यक् द्वादश्यां वेदसंहिताम् ।
स पूर्वोक्तफलं राजन् ! लभते नात्र संशयः ॥
गन्धं पुष्पं फलं तोयं पत्रं वा मूलमेव वा ।

द्वादश्यां मम यो दद्यात्ततो नैवास्ति मत्प्रियः ॥
एतेन विधिना सर्वे देवाः शक्रपुरोगमाः।
मद्भक्ता नरशार्दूल। स्वर्गलोकांस्तु भुञ्जते ॥
वैशम्पायनः। एवं वदति देवेशे केशवे पाण्डुनन्दनः।
कृताञ्जलिपुटं त्वस्य मिदं भक्त्या खुवाच ह ॥
युधिष्ठिरः। यज्ञात्मन्यज्ञसम्भूत। यज्ञनाथ नमोनमः।
चतुर्मूर्ते। चतुर्बाहो। चतुर्व्यूह। नमोनमः ॥
लोकात्मन्। लोकनाथेश। लोकवास। नमोनमः।
सर्वज्ञ। सर्वलोकेश। हृषीकेश। नमोनमः ॥
सहस्रशिरसे तुभ्यं सहस्राक्ष। नमोनमः।
पद्मयज्ञ। नमस्तेऽस्तु सर्वयज्ञ। नमोनमः ॥
त्रयीमय। त्रयीनाथ। त्रयीलभ्य। नमोनमः।
सृष्टिसंहारकर्त्तेति नारसिंह। नमोनमः ॥
भक्तप्रिय। नमस्तेऽस्तु सीमनाथ। नमोनमः।
हयवक्त्र नमस्तेऽस्तु चक्रपाणे। नमोनमः ॥
पञ्चभूत। नमस्तेऽस्तु पञ्चायुध। नमोनमः।
वैशम्पायनः। भक्तिगद्गदया वाचा स्तुवन्नेव युधिष्ठिरः ॥
हृष्टीत्था केशवो हस्ते प्रीतात्मा तं न्यवारयत्।
निवार्य च पुनर्वाचा भक्तिनम्रं युधिष्ठिरम् ॥
वक्तुमेव नरश्रेष्ठं धर्मपुत्रं प्रचक्रमे।
भगवानुवाच। चन्ध्यवसितमिदं राजन्यो यासि नरपुङ्गव। ॥
तिष्ठ हृष्टः यथापूर्वं धर्मानेव युधिष्ठिर।
युधिष्ठिरः। भगवन्। त्वत्प्रसादं तु श्रुत्वा श्रुत्वा पुनः पुनः ॥
न शान्तिरस्ति देवेश। शृण्वतोऽपि च मे मन।

इदञ्च मम सम्प्रश्नं वक्तु मर्हसि माधव ! ॥
द्वादश्यां कृष्णपक्षे तु अर्च्चनीयः कथं भवेत् ।
भगवानुवाच । शृणु राजन् । यथातथ्यं तत्सर्वं कथयामि ते ॥
माहात्म्यं कृष्णद्वादश्या मर्च्चनीयम् फलं मम ।
एकादश्या मुपोष्यैव द्वादश्यामर्च्चयेत्तु माम् ॥
विप्रानपि यथालाभं भोजयेद्भक्तिमान्नरः ।
स गच्छेद्दक्षिणामूर्तिर्मोक्ष नात्र विचारणा ॥
चन्द्रसालोक्य मथवा ग्रहनक्षत्रपूजितः ।

---

## ऊनविंशोऽध्याय।

इति श्रीगौतमीये वैष्णवधर्मशास्त्रे अष्टादशोऽध्यायः ।
वैशम्पायनः । केशवेनैव माख्याते धर्मपुत्त्रः पुन प्रभुम् ॥
पप्रच्छ दानकालञ्च विशेषञ्च विधि नृपः ।
युधिष्ठिर । देवकीफलमाख्यातं विषुवेष्वमरेश्वर ! ॥
सूर्य्यचन्द्रमसे चैव दत्ते दाने च किं फलम् ।
भगवानुवाच । शृणुष्व राजन् ! विषुवे सोमार्कग्रहणेषु च ।
व्यतीपातेऽयने चैव दान स्यादक्षयन्नृप ! ॥
राजन्नयनयोर्मध्यं विषुवं सम्प्रचक्षते ।
समरात्रिदिने तत्र सन्ध्यया विषुवे नृप ! ॥
ब्रह्माद्यं शङ्करश्चापि तिष्ठामः सहिता स्ततः ।
तस्मिन् मुहूर्त्ते ते सर्वे चिन्तयन्तः परंपदम् ॥
शक्रश्च पितरो रुद्रा वसवश्चाश्विनौ तथा ।
साध्या विश्वे सगन्धर्वाः सिद्धा ब्रह्मर्षय स्तथा ॥
सोमो ग्रहगणश्चैव सागरा सरितस्तथा ।

मधूतोऽम्बरसो नागा-यचराक्षसगुह्यका ॥
एते चान्ये च राजेन्द्र । विषुवे संयतेन्द्रियाः ।
सोपवासा प्रयत्नेन भजन्ते ध्यानतत्पराः ॥
अन्नं गावस्तिलान् भूमिं कन्यादानं तथैव च ।
गृहमाच्छादनं धान्यं वाहनं शयनं तथा ॥
यच्चान्यच्च मया प्रोक्तं तत्प्रयच्छ युधिष्ठिर ।
दीयते विषुवे चैव श्रोत्रियेभ्यो विशेषतः ॥
तस्य दानस्य कौन्तेय । क्षयो नैवोपपद्यते ।
वर्धते इरत पुण्यं तद्दानं कोटिसम्मितम् ।
विषुवे स्नापनं यस्तु मम कुर्याद्धरस्य वा ॥
अर्चनाद्य यथान्यायं तस्य पुण्यफलं शृणु ।
दशजन्मकृतं पापं तस्य सद्यो विनश्यति ॥
दशानां मखमेधानां सिष्टानां लभते फलम् ।
विमानं दिव्यमारूढः कामरूपी यथासुखम् ॥
स याति कामगं लोकं रुद्रलोकमथापि वा ।
तत्र वै देवगन्धर्वैः गीयमानो यथासुखम् ।
दिव्यवर्षसहस्राणि कोटिमेकन्तु मोदते ॥
ततश्चापि च्युतः कालादिह लोके द्विजोभवेत् ।
चतुर्णामपि वेदानां पारगो ज्ञानविद्भवेत् ॥
चन्द्रसूर्यग्रहे यान्ति मम वा शङ्करस्य वा ।
गायते मम वा राजन् । जपेद्वा शङ्करस्य वा ॥
शङ्ख कुर्वन्ति नादैश्च कांसघण्टाध्वनैरपि ।
कारयेत्तु ध्वनिं भक्त्या तस्य पुण्यफलं महत् ॥
गान्धर्वैः शोभनैश्च शब्दैरुत्कृष्टनादिभिः ।

दुर्बलोऽभिभवेद्राज्ञः सोऽमत्र बलवान् भवेत् ॥
सूर्येन्दूपप्लवे यद्दै श्रोत्रियेभ्यः प्रदीयते।
तत्सहस्रगुणं भूत्वा दातार मुपतिष्ठति ॥
महापातकसंयुक्तो यद्यपि स्यान्नरो नृप !।
निर्लेप स्तत्क्षणादेव तेन दानेन जायते ॥
चन्द्रसूर्यप्रकाशेन विमानेन विराजता।
याति सोमपुरं रम्यं सेव्यमानोऽप्सरोगणैः ॥
यावन्त्यब्दानि तिष्ठन्ति गगने शशिना सह।
तावत्कालं स राजेन्द्र! सोमलोके महीयते ॥
ततश्चापि च्युतः कालादिह लोके युधिष्ठिर!।
वेदवेदाङ्गविद्विप्रः कोटीधनपति र्भवेत् ॥
युधिष्ठिरः। भगवं स्तव गायत्री जप्यते तु कथं नृभिः।
किं वा तस्याः फलं देव। ममाचक्ष्वसिताम्बर! ॥
भगवानुवाच। द्वादश्यां विषुवे चैव चन्द्रसूर्यग्रहे तथा।
अयने श्रवणे चैव व्यतीपाते तथैव च।
अश्वत्थदर्शनेचैव तथा मद्दर्शनेऽपि च ॥
जप्यात्तु मम गायत्री मथवाष्टाक्षरन्नृप!।
आजन्मदुष्कृतन्तस्य नाशयेन्नात्र संशयः॥
युधिष्ठिरः। अश्वत्थदर्शनं देव! किं त्वद्दर्शितसन्निभम्।
एतत्कथय देवेश! परं कौतूहलं हि मे ॥
भगवानुवाच। अहमश्वत्थरूपेण पालयामि जगत्त्रयम्।
अश्वत्थो न स्थितो यत्र नाहन्तत्र प्रतिष्ठितः ॥
यत्राहं न स्थितो राजन्नश्वत्थश्चापि तत्र न।
यश्चैनमर्चयेद्भक्त्या मां स साक्षात्समर्चति ॥

यत्नेन गच्छेत्कोप्यग्नीमेव प्रदक्षिणम् स।
तस्मात्प्रदक्षिणं कुर्यान्नभिवादेन प्रत्यहम्॥
गावोविमा सर्वार्थिनो मम रूपं युधिष्ठिर।।
एतत्त्रय हि महतां नावमन्येत कर्हिचित्॥
अवमानित चेत्, दह्याद्दहत्यासप्तमं कुलम्।
ब्राह्मणोब्राह्मणोगावो मन्यया तारयन्ति हि।
तस्मादेतत्प्रयत्नेन राजन्। पूजितु मर्हसि॥
युधिष्ठिर। ब्राह्मणस्तेन देहेन शूद्रत्व कथमाप्नुयात्।
ब्रह्म वा नश्यति कथं तत् देव। वक्तु मर्हसि॥
भगवानुवाच। अपस्नानन्तु यो विप्रः कुर्य्याद् द्वादशवार्षिकम्।
स तेनैव शरीरेण शूद्रत्वं याति पाण्डव।॥
शूद्रग्रामे तथाधिको वसेद्वा दशवार्षिकम्।
शूद्रोक्तमपि कुर्वीत शूद्रत्व याति वै द्विजः॥
यस्तु राजाश्रयेणैव जीवेद्दं द्वादशवार्षिकम्।
स शूद्रत्वं व्रजेद्विप्रो वेदाना पारगो यदि।
वर्तते नगरे वापि यो वा द्वादशमावसेत्।
स शूद्रत्व व्रजेद्विप्रो नात्र कार्या विचारणा॥
उत्पादयति यत्पुत्र शूद्राया कामतोद्विज.।
तस्य कायगत ब्रह्म सर्वमेव विनश्यति॥
मद्यपस्त्रीमुखं मोहादास्वादयति यो द्विज।
तस्य कायगतं ब्रह्म सद्यएव विनश्यति॥
मैथुन कुरुते यस्तु जिह्वाया ब्राह्मणो द्वय।।
तस्य कायगत ब्रह्म सद्यएव विनश्यति॥
य सोमलतिकां विप्र, केवल भक्षयेद्वृथा।

तस्य कायंगतं ब्रह्म सद्य एव विनश्यति ॥
विप्रत्वं दुर्लभं प्राप्य वेदमार्गैर्देवमादिभिः ।
विनाशयन्तु यस्तत्तु तज्जीवापि युधिष्ठिर ! ॥
तस्मात्सर्वप्रयत्नेन मत्प्रियार्थं युधिष्ठिर ! ।
जातिभ्रंशकरं कर्म न कुर्यात् सद्गो द्विजः ॥
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे एकोनविंशतिरध्यायः ।

---

## विंशोऽध्यायः ।

युधिष्ठिरः । देशान्तरे गते विप्रे संयुक्ते कालधर्मणा ।
शरीरनाशे संप्राप्ते कथा विप्रकल्पना ॥
भगवानुवाच । श्रूयतामाहिताग्नेस्तु यथा तस्य सत्क्रिया ।
पलाशवृन्तैः प्रतिमाकर्तव्या कल्पचोदिता ॥
त्रीणि षष्टिशतान्याहुरस्थीन्यस्य नराधिप ! ।
तेषां विकल्पना कार्या यथाशास्त्रविनिश्चयम् ॥
अशीत्यर्धं तु शिरसि ग्रीवायां दश एव च ।
बाहोश्चापि शतं दद्यादङ्गुलीषु पुनर्दश ।
शिरसि त्रिंशतं दद्याज्जठरे चापि विंशतिम् ॥
वृषणे द्वादशार्धं तु शिश्ने चाष्टार्धमेव च ।
दद्यात्तु शतमूर्वोस्तु षष्ठार्धं जानुजङ्घयोः ॥
दश दद्याच्चरणयोरेषा प्रेतविकल्पना ।
एवं विकल्पनां कृत्वा कुर्याद्विप्रस्तु सत्क्रियाम् ॥
युधिष्ठिरः । विशेषतीर्थं सर्वेषां संशुद्धानामनुग्रहात् ।
अज्ञानान्तारणार्थं वै वक्तुमर्हसि धर्मतः ॥
भगवानुवाच । प्रवक्ष्ये सर्वतीर्थानां सत्यज्ञायन्ति मामगाः ।

सत्यं अवंचनं तीर्थं हिंसातीर्थं समुच्यते ॥
दानं तीर्थं दयातीर्थं शीलतीर्थं युधिष्ठिर ।
अर्थसन्तोषणं तीर्थं नारीतीर्थं पतिव्रता ॥
सन्तुष्टो ब्राह्मणस्तीर्थं ज्ञानं वै तीर्थमुच्यते ।
भक्ता सततं तीर्थं यतयस्तीर्थमुच्यते ॥
शरण्यः पुरुषस्तीर्थमन्न तत्तीर्थमुच्यते ।
आतिथेयिः परं तीर्थं अतिथीस्तीर्थमुच्यते ॥
व्रतस्य धारणं तीर्थं आर्जवं तीर्थमुच्यते ।
देवशुश्रूषणं तीर्थं गुरुशुश्रूषणं तथा ॥
द्विजशुश्रूषणं तीर्थं तीर्थं ज्ञानस्य धारणम् ।
दारसन्तोषणं तीर्थं ऋतं सत्तीर्थमुच्यते ॥
ब्रह्मचर्यं परं तीर्थं त्रेताग्निस्तीर्थमुच्यते ।
मूलधर्मं स विज्ञेय मनस्तत्त्वं वा युतम् ॥
गच्छ तीर्थानि कौन्तेय धर्मो धर्मेण वर्तते ।
द्विविधं तीर्थमित्याहु स्थावरं जङ्गमं तथा ॥
स्थावरज्जङ्गमं श्रेष्ठं तत्त्वे ज्ञानपरिग्रहात ।
कर्मणा हि विशुद्धस्य पुरुषस्येव भारत ।॥
हृदये सर्वतीर्थानि तीर्थभूतः स उच्यते ।
गुरुतीर्थपरं ज्ञानं मतस्तीर्थं न विद्यते ॥
ज्ञानतीर्थं तपस्तीर्थं ब्रह्मतीर्थं सनातनम् ।
क्षमातु परमं तीर्थं सर्वतीर्थेषु पाण्डव ।॥
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
मानितोऽमानितोवापि पूजितोऽपूजितोऽपि वा ।
आक्रुष्टस्ताडितो वापि क्षमावां तीर्थमुच्यते ॥

क्षमा दमः क्षमा दानं क्षमा सत्यं क्षमा तपः।
क्षमा हिंसा क्षमा धर्मः क्षमा चेन्द्रियनिग्रहः॥
क्षमा दया क्षमा यज्ञः क्षमा धैर्यं धृतं जगत्।
क्षमावान् प्राप्नुयात् स्वर्गं क्षमावान् प्राप्नुयाद्यशः॥
क्षमावान् प्राप्नुयान्मोक्षं क्षमीवा तीर्थमुच्यते।

आत्मा नदी भारत। पुण्यतीर्थं नत्वा तीर्थं सर्वतीर्थं प्रधानतः।
युत्वा तीर्थं सर्वमात्मन्ययोक्ते, स्वर्गो मोक्षः सर्वमात्मन्यधीनम्॥
आचारवक्षान्त्यगोजयोभिना सत्यप्रसन्नेन मनोहरेण।
ज्ञानाम्बुना स्नाति च योऽपि नित्यं किन्तस्य भूयः सलिलेन क्षत्यम्॥

युधिष्ठिरः। भगवन्! सर्वपापघ्नं प्रायश्चित्तमनुत्तमम्।
त्वङ्गकस्य नरश्रेष्ठ! मम वक्तुं त्वमर्हसि॥
रहस्यमिदमत्यर्थं न श्राव्यं पापकर्मणाम्।
अवैष्णवानामश्राव्यं प्रायश्चित्तं ब्रवीमि ते॥
वामनं ब्राह्मणं दृष्ट्वा भक्तिनान्तरात्मना।
नमो ब्रह्मण्यदेवायेत्यभिवादनमाचरेत्॥
प्रदक्षिणन्तु तिः कुर्यात् पुनरष्टाक्षरेण तु।
तेन तुष्टो नरश्रेष्ठ! तत्पापं क्षपयाम्यहम्॥
पीवघटा वराहस्य मृत्तिका शिरसा वहन्।
प्राणायामशतं कृत्वा नरः पापैर्विमुच्यते॥
दक्षिणावर्तशङ्खाद्वा कपिलाशृङ्गमेव च।
प्रातः स्नातो नदीं गत्वा सम्प्रस्क्रोन गमतः॥
सलिलेन तु यः स्नायात् सतिलेन रविग्रहे।
तस्य यत्सञ्चितं पापं तत्क्षणादेव नश्यति॥
सप्तकान्नि सतैस्तोयैः कपिलाया युधिष्ठिर!।

गोमूत्रेणापि य स्नात्वा गोहिंसान् ममवादिन ॥
विप्रपादच्युतैर्वापि तोयैः पापं प्रणश्यति ।
नमस्येत्तु सद्भक्त्या शिंशुमारप्रजापतिम् ॥
चतुर्दशाङ्गयुक्तस्य तस्य पाप प्रणश्यति ।
ततश्चतुर्दशाङ्गानि शृणु तस्य नराधिप ! ॥
शिरो धर्मो हनू ब्रह्म यज्ञमुत्तरदक्षिणौ ।
हृदयन्तु भवेद्विष्णुर्हस्तौ स्यातान्तथाश्विनौ ।
धनिर्मध्यं भवेद्राजन् ! शिश्न संवत्सरो भवेत् ॥
मित्रावरुणकौ पादौ पुच्छमूल हुताशनः ।
ततः पश्चाद्भवेदिन्द्रः तत पश्चात्प्रजापति ॥
अभयश्च तत. पश्चात् स एव ध्रुवसञ्ज्ञित. ।
एतान्यङ्गानि सर्वाणि शिंशुमारप्रजापते. ॥
पिबेत्तु पञ्चगव्य य पौर्णमास्यामुपोषित. ।
तस्य नश्यति तत्सर्वं यत्पापं पूर्वसञ्चितम् ॥
अथैव ब्रह्मकूर्चन्तु समस्तं तु पृथक् पृथक् ।
मासि मासिपिबेद्यस्तु तस्य पापं प्रणश्यति ॥
परञ्च ब्रह्मकूर्चस्य शृणु मन्त्रञ्च भारत ! ।
पलाश पद्मपत्र वा ताम्र वाथ हिरण्मयम् ॥
सादयित्वा तु गृह्णीयाच्चत्तु पावसुदाहृतम् ।
गायत्र्या गृह्य गोमूत्र गन्धद्वारेति गोमयम् ॥
आप्यायस्वेति च क्षीर दधिक्राव्णेति वै दधि ।
आज्यं शुक्रमसीत्येव देवस्येति कुशोदकम् ।
आपोहिष्ठेति सगृह्य यवचूर्णं यथाविधि ॥
तद्वायो च तथाङ्क्त्वा समिद्धेतु हुताशने ।

आतेभ्य प्रणवेनैव निर्मथ्य प्रणवेन तु ॥
स्हृत्य प्रणवेनैव पिवेच्च प्रणवेन तु ।
महतापि स पापेन त्वचेवाहिर्विमुच्यते ॥
इन्द्रान इति च पादं पठेन्मः संहितामिमाम् ।
अप्सुर्जलेऽथवादित्ये तस्य पाप प्रणश्यति ॥
सम सूक्त जपेद्यस्तु नित्य संयतमानस ।
न स पापेन लिप्येत पद्मपत्रमिवाम्भसा ॥
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे रहस्यप्रायश्चित्त नाम विंशोऽध्याय ।

---

## एकविंशोऽध्याय: ।

युधिष्ठिर. । कीदृशा ब्राह्मणाः पुण्या भावसिद्धाः सुरेश्वर । ।
तत्कर्म सफलं वेति कथयस्व ममाच्युत । ॥
भगवानुवाच । शृणु पाण्डव । तत्सर्वं ब्राह्मणाना यथाक्रमम्
सफलं निष्फलञ्चेति तेषा कर्म ब्रवीमि ते ।
त्रिदण्डधारणं मौनं जटाधारणमुण्डनम् ।,
वल्कलाजिनसंवीतो व्रतचर्याभिषेचनम् ॥
अग्निहोत्रं वनेवास स्वाध्यायो ध्यानसंस्क्रिया ।
सर्वाण्येतानि वै मिथ्या यदि भावो न निर्मल ॥
अग्निहोत्र हुता राजन् । हुता वेदास्तथैव च ।
मौनो देवान् तुष्यन्ति श्रूयता तत्र कारणम् ॥
शान्तो दान्तो जितक्रोधो जितात्मा न् जितेन्द्रियम् ।
तमेव ब्राह्मण मन्ये शेषा. शूद्रा इति स्मृत. । ॥

अग्निहोत्रव्रतपरान् स्वाध्यायनिरतान् शु
उपवासरतान् दान्तांस्तां स्देवा ब्राह्मणा
न जातिः पूज्यते राजन् ! गुणाः कल्याण
चण्डालमपि वृत्तस्थं तन्देवा ब्राह्मणा वि
मनःशौच कर्मशौच कुलशौचञ्च भारत !
शरीरशौच वाक्शौचं शौचं पञ्चविध स्मृ
पञ्चस्वेषु च शौचेषु हृतिशौच विशिष्यते ।
हृदयस्य तु शौचेन स्वर्गं गच्छन्ति मानवा
अग्निहोत्रपरिभ्रष्टः प्रसक्तः क्रयविक्रये ।
वर्णसङ्करकर्त्ता च ब्राह्मणो वृषलैः समः ॥
यस्य वेदश्रुतिर्नष्टा कर्षकश्चापि यो द्विजः ।
विकर्मस्थोऽपि कौन्तेय ! स वै वृषल उच्यते
वृषो धर्मो हि विज्ञेयस्तस्य च कुरुते लयम्
विपदन्तं विदुर्देवा निन्दितं श्वपचादपि ॥
स्तुतिभि ब्रह्मपूर्वाभिर्यश्चन्द्र स्तौति मामृप
न च मां स्तौति पापात्मा स मामाक्रोशते ध्
श्वस्थितो च यथा क्षीरं ब्रह्म वै वृषले तथा
अदृष्टो दुष्टतामेति शुना स्पृष्टं हविर्यथा ॥
अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरम्
धर्मशास्त्रपुराणानि विद्या ह्येताश्चतुर्दश ॥
यान्युक्तानि मया सम्यक् विद्याजन्मानि भार
उत्पन्नानि पवित्राणि पावनार्थन्तथैव च ॥
तस्मात्तानि न शूद्राय स्पृष्टव्यानि युधिष्ठिर !

लोके तीर्थपवित्राणि पञ्चामेध्यानि भारत ! ।
श्वा शूद्रश्वपाकश्चेत्यपवित्राणि पाण्डव ! ॥
देवलः कुक्कुटो यूपश्चद्रक्या ह्यपत्नीपतिः ।
पञ्चैते सुरमेध्याश्च न स्प्रष्टव्याः कथञ्चन ॥
स्पृष्ट्वैतान्यष्ट वै विप्रः सचैलो जलमाविशेत् ।
मद्भक्तान् शूद्रसामान्यादवमन्यन्ति ये नराः ।
नरकेष्वेव तिष्ठन्ति वर्षकोटिं नराधमाः ॥
चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान् ।
अवमन्य पतत्येव नरके रौरवे नरः ॥
मम मद्भक्तभक्तेषु सम्प्रीतिरधिका भवेत् ।
तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ॥
कीटपक्षिमृगाणाञ्च मयि सन्न्यस्तचेतसाम् ।
ऊर्द्ध्वामेव गतिं विद्धि किं पुनर्ज्ञानिनां नृप ! ॥
पत्रं वाप्यथवा पुष्पं फलं वा तोयमेव वा ।
ददाति मम शूद्रोऽपि शिरसा धारयामि तम् ॥
विप्रानेवार्चयेद्भक्त्या शूद्रः प्रायेण मत्प्रियः ।
तेषां तेनैव रूपेण पूजां गृह्णामि भारत ! ॥
वेदोक्तेनैव मार्गेण सर्वभूतहृदि स्थितम् ।
मामर्चयन्ति ये विप्राः सायुज्यं यान्ति ते मम ॥
परित्राणाय भक्तानां प्रादुर्भावः कृतो मया ।
प्रादुर्भावाकृतिः काचिदर्चयेत्तां युधिष्ठिर ! ।
आसामन्यतमां मूर्तिं यो भक्त्या च समर्चति ॥
तेनैव परितुष्टोऽहं भविष्यामि न संशयः ।
कृत्वा च मणिरत्नैश्च ताम्रेण रजतेन वा ॥

सचा प्रतिकृति कुर्याद्रचना काञ्चनेन वा ।
पुण्यं दशगुणं स्यादेतेषामुत्तमोत्तमम् ॥
जयकामोऽर्चयेद्राजा विद्याकामो द्विजोत्तम ।
वैश्योऽपि धनकामस्तु शूद्रः पुण्यफलप्रिय ॥
सर्वकामाः स्त्रियो वापि सर्वान् कामानवाप्नुयुः ॥
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे भक्त्यार्चनविधि नाम एकविंशोऽध्यायः ।

---

## द्वाविंशोऽध्यायः ।

युधिष्ठिरः । कीदृशानान्तु शूद्राणां नानुगृह्णासि वार्चनः
एतद्देव सर्वमाख्याहि तत् ब्रवीहि सुरोत्तम ! ॥
श्रीभगवानुवाच । अव्रतेनाप्यभक्तेन स्पृष्टा शूद्रेण यार्चना
ता वर्जयामि यत्नेन श्वपाकविहितामिव ॥
त्रैलोक्येऽस्मिन्निरुद्विग्नो न बिभेमि कुतश्चन ।
दिवा वा यदि वा रात्रौ दुःखं कुरु लाघवात ॥
न भवेद्दैत्येभ्यो रक्षोभ्यश्चैव यो नृप ।।
शूद्रवर्णार्चिताद्देशाद्यस्तु सुमहत्भयम ।
तस्मात्प्रणवं शूद्रोमन्त्र मे नैव कीर्तयेत् ॥
प्रणवं हि परं ब्रह्म नित्यं ब्रह्मविदो विदुः ।
द्विज शुश्रूषणं धर्मं शूद्राणां भक्तितो मयि ॥
ते न गच्छन्ति वै स्वर्गं चिन्तयन्तो हि मां सदा।
द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति ॥
द्विजशुश्रूषणादन्यन्नास्ति शूद्रस्य निष्कृतिः ।

रागो द्वेषश्च मोहश्च पारुष्यञ्चानृशंसता ॥
शाठ्यञ्च दीर्घवैरत्वमतिमानमनार्जवम् ।
अनृतञ्चापवादश्च पैशुन्यमतिलोभता ॥
हिंसास्तेयोऽन्यथावादो वञ्चनाऽऽपललोलुता ।
अबुद्धिता च नास्तिक्यं भयमालस्यमेव च ॥
अशौचत्वञ्चाकृतज्ञत्वं दम्भता स्तम्भ एव च ।
निकृतिश्चाप्यवज्ञानं पातके शूद्रमाविशेत् ॥
दृष्ट्वा पितामहः शूद्रमभिभूतन्तु तामसैः ।
द्विजशुश्रूषणं धर्मं शूद्राणान्तु प्रयुक्तवान् ॥
नश्यन्ति तामसा भावाः शूद्रस्य मयि भक्तितः ।
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥
तदहं भक्त्युपहृतं यत् मूर्ध्ना गृह्णामि शूद्रतः ।
चण्डालो वा प्रियः कश्चित् सर्वपापसमन्वितः ॥
यदि मां सततं ध्यायेत् स पापेभ्यः प्रमुच्यते ।
विद्याविनयसम्पन्ना ब्राह्मणा वेदपारगाः ॥
मयि भक्तिन्न कुर्वन्ति चण्डालसदृशा हि ते ।
वृथा दत्तं वृथा जप्तं वृथाचेष्टं वृथाकृतम् ॥
वृथा तीर्थेतु दत्तस्याद् यो न भक्तो मयि द्विजः ।
यत्कृतञ्च कृतञ्चापि यदिष्टं दत्तमेव वा ॥
अवैष्णवेन तत्सर्वं राक्षसा एव भुञ्जते ।
स्थावरो जङ्गमो वापि सर्वभूतेषु पाण्डव ! ॥
समत्वेन दया कुर्यान्मद्भक्तो मित्रशत्रुषु ।
आनृशंस्यमहिंसा च दया सत्यं तथार्जवम् ॥
अद्रोहं मम भक्तानाम्भूतानामभयप्रद !।

इत्येवमादयो ब्रूयान्मद्भक्त्या श्रद्धयान्वितः ॥
तस्यालयो भवेल्लोकः श्वपाकस्यापि पार्थिव ! ।
किं पुनर्ये समर्चन्ति मद्भक्ताविधिपूर्वकम् ॥
मद्भक्ता मद्गतप्राणाः स्तुवन्ति ये तु मां सदा ।
षष्टिवर्षसहस्राणि तपस्तप्यति यो नरः ॥
नासौ तत्पदमाप्नोति मद्भक्तैर्यदवाप्यते ।
मामेव तस्माद्राजर्षे ! ध्याहि नित्यमतन्द्रितः ॥
अवाप्स्यसि ततः सिद्धिं निश्चयं हि अनुत्तमाम् ।
असात्त्विकं प्रभाषन्ते शूद्रा भागवता इति ॥
न शूद्रा भगवद्भक्ता विप्रा भागवता स्मृताः ।
द्वादशाक्षरतत्त्वज्ञ चतुर्व्यूहविधानवित् ॥
अच्छिद्रः पञ्चकालज्ञः सर्वे भागवताः स्मृताः ।
ऋग्वेद यजुषो होता यजुषाध्वर्युरेव च ॥
सामवेदेन चोद्गाता पुण्यं नाभिस्तुवन्ति माम् ।
अथर्वशिरसा चैव नित्यमाथर्वणा द्विजाः ॥
स्तुवन्ति सततं ये च ते हि भागवता स्मृताः ।
वेदाधीनाः सदा यज्ञा यज्ञाधीनाश्च देवताः ॥
देवता-ब्राह्मणाधीना तस्माद्विप्रास्तु देवताः ।
अनाश्रिताश्रयश्चास्ति मुख्यमाश्रय माश्रयेत् ॥
रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो राजन्नाहं किञ्चिदुपाश्रितः ॥
ममाश्रयो न किञ्चित्तु सर्वेषामाश्रयोऽस्म्यहम् ।
एवमेतन्मया प्रोक्तं रहस्यमिदमुत्तमम् ॥
धर्मप्रिय ! सुखे राजन्नित्यमेव समाचर ।

इदं पवित्रमाख्यानं पुण्यं वेदेन सम्मितम् ॥
यः पठेत्प्रात्य धर्म सहस्रयज्ञानि भारत ! ।
धर्मोऽपि वर्धते तस्य बुद्धिश्चापि प्रसीदति ।
पापश्चाग सुवेत्येव कल्याणाञ्च विवर्धते ॥
एतत्पुण्यं पवित्रञ्च पापनाशनमुत्तमम् ।
श्रोतव्यं श्रद्धया युक्तै र्मद्भक्तैश्च विशेषतः ॥
श्रावयेद्यस्त्विदं भक्त्या प्रयतोऽथ शृणोति वा ।
स गच्छेन्मम सायुज्यं नात्र कार्या विचारणा ॥
यश्चेदं श्रावयेच्छ्राद्धे मद्भक्तो मत्परायणः ।
पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम् ।
वैशम्पायनः । प्रहृष्टः सुमना भूत्वा चिन्तयेताद्भुतां कथाम् ॥
पूजयामास गोविन्दं धर्मपुत्त्रः पुनः पुनः ।
देवा ब्रह्मर्षयः सिद्धा गन्धर्वाश्च रसस्तथा ॥
भूता यक्षा ग्रहाश्चैव गुह्यका भुजगा तथा ।
वालखिल्या महात्मानो मुनयस्तत्त्वदर्शिनः ॥
तथा भागवताश्चैव पञ्चकालरता स्तथा ।
कौतूहलसमायुक्ता भगवद्भक्तिमागताः ॥
श्रुत्वा तु परमं पुण्यं वैष्णवं धर्मशासनम् ।
विमुक्तपापाः पूतास्ते सम्भूता स्तत्क्षणेन तु ॥
प्रणम्य शिरसा विष्णुं प्रसादसुमुखेक्षणाः ।
यथागतं ययुर्देवाः सिद्धाश्चर्षिगणैः सह ॥
गतेषु तेषु सर्वेषु केशवः केशिहा तदा ।
विसृज्य पाण्डवान् सर्व्वान् प्रयतान् द्वारकां ययौ ॥

ततः प्रणम्य गोविन्दं तदा प्रभृति पाण्डवाः ।
कपिलाद्यानि दानानि ददुर्विष्णुपरायणाः ॥
मधुसूदनवक्त्राणि स्मृत्वा चैव पुनः पुनः ।
मनसा पूजयामासुर्हृदिस्थं पाण्डवाः ॥
युधिष्ठिरोऽपि धर्मात्मा हृदि कृत्वा जनार्दनम् ।
तद्भक्तसम्मानात्यक्तसर्वाशो तत्परोऽभवत् ॥
एवमेतत्पुराहृत्तं वैष्णवं धर्मशासनम् ।
मया ते कथितं राजन् सर्वकिल्बिषनाशनम् ॥
चिन्तयस्व सदा विष्णुं अप्रमत्तः कुरूद्वह ।
लोका गच्छन्ति नान्येन तद्विष्णोः परमं पदम् ॥

इति श्रीवृद्धगौतमीये वैष्णवधर्मशास्त्रे द्वाविंशतितमोऽध्यायः ।

समाप्तमुत्तरार्द्धम् ।

समाप्तोऽयं ग्रन्थः ।